ध्रुवामाप्याययेतामध्वर्युश्च[१] यजमानश्चेत्य॥ध्वर्युरेव ध्रुवामाप्याय्य समिष्टयजुर्जुहुयादिति शालीकिः। ॥

समिष्टयजुषो होम इति ॥ सूत्रमाचार्ययोर॥न्यो ह स्माह गौतमः स्वाहा वाचीति हुत्वा बर्हिषो धातूनाꣳ संप्रस्नुत्य ५ ध्रुवायाꣳ समञ्ज्यानुप्रहृत्याभिजुहुयात्स्वाहा वाते धाः स्वाहेति। ॥ १५ ॥ पञ्चमः ॥

अथातो ऽग्न्याधेयं व्याख्यास्यामः ॥

I. 53. 6. संभारेष्विति ॥ सूत्रꣳ राथीतराणाम॥न्यो[१] ह स्माह बौधायनो नाग्ननिहृतं कुर्वीत घोररूपमिति॥ कुर्वीतैवाग्न-
१० निहृतं। न तु मुञ्जकुलायं। न ह्येतस्यानुख्या विज्ञायत[२] इति शालीकिः। ॥

1. 53. 10. पात्राणां करण इति ॥ स ह स्माह बौधायनस्त्वक्-आसेचनानि कारयेदग्रतःपुष्कराण्येवमस्य प्राचीनपुष्कराः स्रुचः सन्ना भवन्तीत्य॥न्यो ह स्माह शालीकिस्त्वक्आसेचनानि
१५ कारयेन्मूलतःपुष्कराण्येवमस्य प्राचीनपुष्कराः[४] स्रुचः सन्ना भवन्तीति। विज्ञायते तस्मादवाचीनाग्रा वनस्पतयः पृथिवीं चियन्तीति[५]। ॥

---

१ Thus G (sec. m.) and Sāyaṇa; °प्यायेताम° C G (pr. m.) Ben; °व्यायेताम° H; °प्यायताम° D; °प्यायत्य° U Be.

२ रथीत° Bu.

३ विद्यत U (sec. m.)

४ Thus G U D C Be; प्रतीचीन° Ben Bu H.

५ Thus (चियन्तीति) Bu U C D G Ben; चिपंतीति Be H.

स्रुचां प्रमाण इति ॥ बाहुमात्राः स्युरिति बौधायनो ॥ अरत्निमात्रा इति शालीकिः ॥ प्रादेशमात्रा इत्यौपमन्यवः ॥

स्रुचामाकृतिविकार इति ॥ हस्तोष्ठ्यः[१] स्युरिति बौधायनो ॥ वायसपुच्छा इति शालीकिरङ्गुष्ठप्रवेशना[२] इत्यौपमन्यवः ॥ ५

I. 54. 16. अम्बरीषस्य करण इति ॥ उत्तरतो ऽग्न्यगारस्याम्बरीषं कुर्यादिति बौधायनो ॥ यत्रैवाम्बरीषः स्यात्तत्कुर्यादिति शालीकिः ॥

I. 55. 12. अग्न्यगारस्य परिक्रम[३] इति ॥ दक्षिणेनेति बौधायन ॥ उत्तरेणेति शालीकिः ॥ १०

I. 55. 14. रोहिते चर्मणीति ॥ सूत्रं बौधायनस्याप्यरोहितं स्यादिति[४] शालीकिः ॥

I. 55. 15. ब्रह्मौदनस्य[५] मन्त्रामन्त्र इति ॥ मन्त्रवान्स्यादिति बौधायनस्तूष्णीक[६] इति[६] शालीकिः ॥

ib. ब्रह्मौदनस्य निर्वपण इति ॥ पवित्रवता पात्रेण मन्त्रवन्तमिति बौधायनो ऽपवित्रेण तूष्णीकमिति शालीकिः ॥ १५

---

१ हस्त्योष्ठ्य Ben H C D Bu G; हस्तोष्ठ्य Be U.

२ Thus Be Bu G (sec. m.) U (sec. m.); ॰प्रवेषा H Ben C D G (pr. m.) U (pr. m.).

३ ॰क्रमण G and U (sec. m.).

४ कुर्यादिति C D H Ben U.

५ Here and *infra* the MSS. sometimes ब्रह्मौ॰ sometimes ब्रह्मो॰ ।

६ Thus Be only; ॰ष्णीकमिति G (sec. m.) Bu; तूष्णीमिति H Be U C D G (pr. m.).

I. 56. 4. ब्रह्मौदनस्य श्रपण इति॥ पयसि श्रपयेदिति बौधायनो ऽप्स्विति शालीकिः॥

नैवास्मिन्नाभिघ्न्येन्न निःषिञ्चेदिति बौधायनः कामस्मिन्नाभिघ्न्येन्न निःषिञ्चेदिति शालीकिर्विस्राव्य[1] तऽ[1] ५ सूपवन्तमित्यौपमन्यवः॥

I. 56. 6. ब्रह्मौदनस्योपस्तरण इति॥ सूचं बौधायनस्य नोपस्तृणीतेति शालीकिः॥

I. 56. 10 ब्रह्मौदनस्योद्वासन इति॥ सूचं बौधायनस्यैव पर्युपविशेयुरिति[2] शालीकिः॥

I. 56. 12. १० ब्रह्मौदनस्योपोहन इति॥ यज्ञो मोपनमत्विति वा तूष्णीं वेति पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः॥

ib. ब्रह्मौदनस्य प्राशन इति॥ आर्षेया एव ब्रह्मौदनं प्राश्नीयुरिति बौधायनो य एव केच नियतपाना[3] इति कात्यो ऽन्वो ह स्माहौपमन्यवो महर्त्विज एव ब्रह्मौदनं प्राश्नीयुरुच[4] १५ ह्येवैते[5] सतानुनप्त्रिणो भवन्तीति॥

---

१ Uncertain; विस्राव्यतं U H Ben C D G (pr. m.); विस्राव्य G (sec. m.); विस्राव्यंतं Bu; विस्राव्य सु सूतं Be.

२ Thus Bu G and U (sec. m.); ०पविशेरन्निति the other MSS.

३ Uncertain; नियामा H Ben G (sec. m.) C D; नियक Be; नियपावना Bu; नियतपाना G (pr. m.) U; this seems to be the reading also of the vivaraṇa, according to which the meaning is: सहभोजनाः।

४ ०चो Ben H G C and U (pr. m.).

५ After ०वैते Be ins. प्रथमं, thus also Keś. in a citation of this passage.

I. 57. 1. समिधामभ्याधान इति ॥ सकृत् शालीकिर्यो ह स्माह बौधायनः सकृत्प्राग्निते ऽप्रत्यनक्तुम् समिधो ऽभ्यस्यादध्यादि त्यौचो ह स्माहौपमन्यवो ऽन्वैनाः पार्श्वतः समस्य सादयेत् यदा सर्वं प्राश्नीयुरथैतां पात्रीं निर्णिज्योपस्तीर्य यत्स्थाल्या माज्यमवशिष्टꣳ स्यात्तत्सकृदभ्युन्नीय तेन समिधो ऽभ्यज्या- ५ दध्यादिति ॥

I. 57. 13. गोः करण इति ॥ कुर्यादिति बौधायनो न कुर्या- दिति शालीकिरपि यक्षोरपि कुर्वीतानु चैतस्य भवेत्पुण्या प्रशꣳसेति कात्यः ॥

I. 57. 15. अरण्योः प्रदान इति ॥ सूत्रमाचार्ययोरौचो ह स्माहौप- १० मन्यवो ऽपरराव एवास्मा अरणी प्रयच्छेदरं ददामीत्येव वाचं विसृजेदिति ॥

I. 59. 1. अग्न्यायतनानां परिलेपन इति ॥ सूत्रमाचार्ययोरौचो ह स्माहौपमन्यवो गार्हपत्यायतनमेवैकं परिलिम्पेत्तद्धि विदग्धं भवतीति ॥ १५

I. 59. 2. संभाराणां निवपन इति ॥ सूत्रमाचार्ययोरौचो ह स्माहौ- पमन्यवो गार्हपत्यायतन एवैनान्सर्वैर्मन्त्रैः परिशिष्टाप्य वेधा निवपेदिति ॥ १६ ॥

I. 62. 9. इध्मस्य हरण इति ॥ स ह स्माह बौधायनो जानुदघ्ने प्रथमꣳ हरेदथ नाभिदघ्ने ऽथ ग्रीवदघ्ने प्राणाꣳस्तु नातिहरे- २० दित्यौददान एवैता मात्रा अभिसंपादयेत्प्राणाꣳस्त्वेव नाति- हरेदिति शालीकिः ॥

I. 62. 18.　संभाराणामाक्रमण इति ॥ सूत्र९ शालीकेर॥चो ह स्माह बौधायन एवमेवैतेन पुरस्तात्प्रत्यगावृत्तेन[1] दक्षिणेन पूर्वपदेनोत्तरतः पार्श्वतः[2] संभाराणामाक्रमयेद्यथाहितस्याग्नेरङ्गारा अभ्यववर्तेरन्निति।॥

I. 62. 20. ५　अश्वस्य दान इति ॥ अध्वर्यव एतमग्निपदमश्वं[3] दद्यादन्यं ब्रह्मण इति बौधायन॥ एतं[4] ब्रह्मणे[4] ऽन्यमध्वर्यव[4] इति शालीकिः।॥

I. 63. 1.　इध्मस्य निधान इति ॥ सूत्रं बौधायनस्य॥ तूष्णीमेवेध्मं निदध्यादिति शालीकिः।॥

I. 63. 13. १०　सभ्यावसथ्ययोः करण इति ॥ कुर्यादिति बौधायनो॥ न कुर्यादिति शालीकिः।॥

ib.　सभ्यावसथ्ययोर्विहरण इति ॥ आहवनीयादेवैनौ विहरेदिति बौधायनो॥ ग्रामाग्नेरिति शालीकि॥र्निर्मन्थ्यौ स्यातामित्यौपमन्यवो॥ ऽचो ह स्माहौपमन्यवीपुत्रः सभायामेव १५ सभ्यं व्यपदिशेदावसथ आवसथीयं पर्वणि[5] चैनयो स्थालीपाकौ श्रपयित्वा ब्रह्मणे जुहुयादित्यॆ॥तदपि न कुर्यादित्याश्मीगविः।॥

---

१ Thus G (sec. m.) D G; °वृत्तेन the other MSS.

२ Found only in Be and U (sec. m.).

३ अश्वं given only by Bu and G (sec. m.).

४ एवं instead of एतं Bu; the other MSS. are defective, leaving out एतं ब्रह्मणे ।

५ पर्वणिपर्वणि U (sec. m.).

I. 63. 14. रथचक्रस्य करण इति ॥ कुर्यादिति बौधायनो″ न कुर्यादिति शालीकिर″थो ह स्माहौपमन्यवो रथमेवैतꣳ संयुक्तं[1] प्राञ्चं प्रवर्तयेत्तमृत्विग्भ्यो दद्यादित्य″तदपि न कुर्यादित्याञ्जीगविः′ ॥

I. 64. 9. तनूनामनुदेश[2] इति ॥ प्रत्यधीत्यानुदिशेदिति[3] बौधायनो″ यास्ते अग्ने घोरास्तनुवस्ताभिरमुं[4] गच्छेत्येव ब्रूयादिति शालीकिः′ ॥ ५

I. 64. 11. विराजकामेष्विति ॥ सूत्रं बौधायनस्य″ नर्य प्रजां मे गोपायेत्येव ब्रूयादिति शालीकिः′ ॥

I. 65. 2. पूर्णाहुत्यै हवन इति ॥ सूत्रं बौधायनस्य″ परिश्रित एव पूर्णाहुतिं जुहुयादिति शालीकिः′ ॥ १७ ॥ १०

I. 65. 3. पूर्णाहुतौ तूष्णीमग्निहोत्र इति ॥ सूत्रꣳ राथीतराणाम″थो ह स्माह बौधायनः पूर्णाहुतिमेव जुहुयान्न तूष्णीमग्निहोत्रमिति″ तूष्णीमग्निहोत्रमेव जुहुयान्न पूर्णाहुतिमिति शालीकिः′ ॥ १५

I. 66. 3. दशहोतुर्व्याख्यान इति ॥ स ह स्माह बौधायनो यत्र क्व च हविर्निर्वप्स्यन्स्यात्सामिधेनीर्वानुवक्ष्यन्व्याचक्षीतैव तत्र दश-

---

१ Thus Bu Be G (sec. m.) and Koś.; संप्रयुक्तं U H Ben C D G (pr. m.).

२ Thus Bu Ben H G C D; ॰देशने the vivaraṇa; ॰देशेन Be.

३ Thus Bu U (pr. m.); प्रत्याधी॰ H Ben Be C D U (sec. m.).

४ Thus Be Bu U (sec. m.); पाप्मानं instead of अमुं Ben G C D U (pr. m.) H.

होतारमित्येष्वेवैतदाग्न्याधेयिकेषु[1] तन्त्रेषु दृष्टं भवतीति शालीकिरग्निष्वेवैतदाग्नेये ऽष्टाकपाले दृष्टं भवतीत्यौपमन्यवः ॥

I. 66. 4. तन्त्रकरण इति ॥ स ह स्माह बौधायनः पञ्चदशसामिधेनीकाः स्युर्वार्त्रघ्नावाज्यभागावुच्चैर्देवता इत्यथो ह स्माह शालीकिः सप्तदशसामिधेनीकाः स्युर्वृधन्वन्तावाज्यभागावुपांशुदेवता इत्यथो ह स्माहौपमन्यव आग्नेये ऽष्टाकपाले वार्त्रघ्नावाज्यभागौ स्यातां वृधन्वन्तावैन्द्राग्नादित्ययो[2] रयिमन्तौ[2] पुष्टिमन्तौ पवमानहविःषु वीतवन्तावन्वारम्भेय्यामिति[3] ॥

याजमानस्य करण इति ॥ अभीनामं[4] याजमानं कुर्यादिति बौधायनः ॥ कुर्याद्यथावकाशं याजमानमिति शालीकिः ॥

---

१ Thus Bu G U (sec. m.); एष्टेवैतद॰ H; एष्वेतद॰ Ben U (pr. m.); एतेष्वेतद॰ Be; तेष्वेवैतद॰ D C.— चाग्न्याधे॰ H Ben Be U D G (sec. m.); चग्न्याधे॰ Bu G (pr. m.).

२ ॰योरयिमंतौ C D U (pr. m.) Ben; ॰योरविमंतौ H; ॰योरपिमंतौ Be; योरतिथिमंतौ Bu U (sec. m.). I am uncertain whether रयिमन्तौ or अतिथिमन्तौ is the right reading.

३ Thus Be Ben H C D G and U (pr. m.); पीववंताव॰ Bu; इषवंताव॰ G and U (sec. m.).

४ अभीनमं Be. The word seems to be absol. to अभिनमति ('to change accordingly'). Vivaraṇa: अभिनाममोच्चित्वा, correct perhaps ॰ममूच्चित्वा ।

I. 66. 6. दक्षिणानां दान इति ॥ सूत्रं शालीकेरौ च स्मात्र बौधायनः सर्वा एवैता इष्टीर्दक्षिणावतीः कुर्यात्तस्मिन्नस्मिन्न एकैकस्यां दद्यान्मिथुनावुत्तमायामिति ॥

I. 66. 9. तन्त्रसमास इति ॥ नास्ति तन्त्रसमास आचार्ययोरौ च स्माहौपमन्यव आग्नेयो ऽष्टाकपालो ऽग्नये पवमानाय तत्प्रथमं तन्त्रं स्याद्याग्नये पावकायाग्नये शुचये तद्द्वितीयमथैन्द्राग्न- स्यादित्यश्च[1] चरुरन्तं[1] परीयातामिति ॥ ५

I. 67. 15. दक्षिणानां दान इति ॥ सूत्रं शालीकेराख्यातं बौधा- यनश्चौ च स्माहौपमन्यवः सर्वा एवैता इष्टीर्दक्षिणावतीः कुर्यात्तस्यतस्य एकैकस्यां दद्यान्मिथुनावुत्तमायामिति ॥ १०

अनन्वारब्धदर्शपूर्णमासस्य प्रायश्चित्तकरण इति ॥ कुर्या- दिति बौधायनो न कुर्यादिति शालीकिः ॥

I. 67. 18. अन्वारम्भेष्यामिति ॥ चतुर्होतारं सारस्वतौ होमावन्वार- म्भेष्टिमित्येतदुपवसथे कुर्यादथेतरदिष्ट्यहनि कुर्यादिति बौधा- यनश्चतुर्होतारं सारस्वतौ होमावित्येतदुपवसथे कुर्यादथे- तरदिष्ट्यहनि कुर्यादिति शालीकिश्चतुर्होतारमेवोपवसथे कुर्यादथेतरदिष्ट्यहनि कुर्यादित्यौपमन्यवः सर्वमेवैतदिष्ट्य- हनि कुर्यादित्यौपमन्यवीपुत्रः ॥ १८ ॥ षष्ठः ॥ १५

१ Emended; ०आदित्यश्चचरंतं परीयातामिति U (sec. m.); ०आदित्यश्च- चचरन्तपरियादिति G (sec. m.); ०आदित्यश्चचतुरंतं परीयादिति Bu; ०आदित्यश्च (or क) संत (or च) परीयातामिति (or परियादिति) the other MSS.

I. 69. 1.    अथातः पुनराधेयं[१] व्याख्यास्यामः ॥

I. 69. 16.    सर्पराज्ञ्योऽविति ॥ सूत्रं शालीकेरत्रो ह स्माह बौधायनः सर्पराज्ञिया ऽग्निं गार्हपत्यमादधातीति तं षड्भिराधाय सप्तम्योपतिष्ठेतेति । ॥

I. 70. 1. ५    पूर्णाहुत्यै करण इति ॥ कुर्यादिति बौधायनो ॥ न कुर्यादिति शालीकिः । ॥

I. 70. 3.    तन्त्रकरण इति ॥ सूत्रं शालीकेरत्रो ह स्माह बौधायन उभयानि तन्त्राणि कारयेत्पौनराधेयिकानि चाग्न्याधेयिकानि चाग्नेयमष्टाकपालं निर्वपेत्तस्यासमुदिते ऽग्न्याधेय-

१० दक्षिणा[२] दद्यादथाग्नेयं पञ्चकपालं । तस्यासमुदिते पुनराधेयदक्षिणा[३] दद्यादथैन्द्राग्नं चादित्यं[४] च[४] चरुमथाग्निवारुणं । पारे[५] द्वादशाहस्य तन्त्र[६] इति[६] । ॥

I. 70. 17.    विभक्तीनां धान इति ॥ सूत्रं शालीकेरत्रो ह स्माह बौधायनः सर्वांꣳसर्वास्त्वमुक्त्वा[७] यजेतेत्याग्नेयीरुद्धरा[८] विभ-

१५ क्तीर्दध्यादित्यौपमन्यवः । ॥

---

१ पुनराधानं Bu.

२ ०क्षिणां Bu D C.

३ ०क्षिणां Bu U Ben D C.

४ Emended; च is missing both times in B G (sec. m.), the second च is missing in Be D C Ben H U G (pr. m.).

५ परे H Bu Ben D C U G (pr. m.); पारे Be G (sec. m.).

६ इति is missing in all the MSS., which read तन्त्रो; the vivaraṇa runs: द्वादशाहे गते तन्त्रवोऽस्मीति ।

७ Thus Bu G (sec. m.); सर्वास्त्वमु० the other MSS.

८ Thus Be only; ०ग्नेयीरुद्धव० the other MSS.

I. 70. 12. पुरोडाशस्य परिहोम इति ॥ दैवतं परिजुहुयादिति बौधायनः ॥ सस्विष्टकृत्कमिति शालीकिः ॥

I. 70. 14. स्विष्टकृतो निर्वचन इति ॥ स्वे स्थाने निर्ब्रूयादिति बौधायनः ॥ स्वे स्थाने निरुच्य कामं तत ऊर्ध्वं निर्ब्रूयादिति शालीकिर्वो ह स्माहौपमन्यवः पञ्चैतानि स्विष्टकृत्स्थानानि ५ भवन्तीति[१] । तेषु[२] सर्वेषु निर्ब्रूयादिति ॥

I. 71. 17. अथापहृताग्नेर्नष्टारणीकस्य चेति ॥ सूचᳲ शालीकेर्वो ह स्माह बौधायनः कामं नष्टेषु वापहृतेषु वाग्निषु नाद्रियेताग्न्याधेयमाधानप्रभृति यजमान एवाग्नयो भवन्ति । तस्य प्राणो गार्हपत्यो ऽपानो ऽन्वाहार्यपचनो व्यान आहवनीयः । १० काममुपावरोह्य जुहुयादिति ॥

I. 72. 3. अग्नीनां विहरण इति ॥ सूचं बौधायनस्याधानप्रभृत्येवैते ऽजस्राः स्युरिति शालीकिः ॥

I. 72. 17. पात्राणाᳲ सादन इति ॥ सूचᳲ शालीकेर्वो ह स्माह बौधायनः कूर्चे वा तृणेषु वा पात्राणि सादयेदपसव्यं[३] दारुणा[३] १५ दारु[३] संलीयमानं[३] भवतीति ॥

---

१ G. om. इति ।

२ ज्येष्ठः (meaning? ) ins. Bu.

३ Uncertain reading. Bu reads as given in the text; ॰सर्व्यं दारुणा दारु संधौय॰ G (sec. m.); ॰सर्व्यं दारुणा दारु (sec. m. दारुणा) संधौय॰ U; ॰सव्यां दारुणा दारुराधौय॰ Ben H; ॰सव्या दारुणा दारुणा संधौय॰ Be; ॰पसव्या दारुणां दारुराधौय॰ D C; ॰पसव्यां दारुणां दारु संधौय॰ G (pr. m.).

द्वयोर्होम इति ॥ स ह स्माह बौधायनो यदि पूर्वा[1] श्रेषं नीयादुत्तरया[2] प्रायश्चित्तं कुर्वीताथ यद्युत्तरा[3] श्रेषं नीयादुभयं[4] श्रेषकृतꣳ[5] स्यादन्यथा प्रायश्चित्तं कुर्वीतेत्यु॑चो ह स्माह शालीकिर्यतरा कतरा चिद् श्रेषं नीयादुभयं[6] श्रेषकृतꣳ
५ स्यादन्ययैव ततः प्रायश्चित्तं कुर्वीतेति । ॥ १९ ॥

I. 73. 10. अभिज्वलन इति ॥ सूत्रं बौधायनस्य ॥ गार्हपत्यादङ्गारेणाभिज्वाल्य त्रिः पर्यग्नि कुर्यादिति शालीकिः । ॥

I. 73. 13. वर्त्म कुर्वन्नुदग्नुद्वासयतीति ॥ सूत्रꣳ शालीकेरु॑चो ह स्माह बौधायनस्तत्रैव[7] त्रिः प्रतिष्ठापयन्निवोद्वासयेत्त्रय इमे
१० लोका । एष्वेव लोकेषु प्रतितिष्ठतीति[8] । ॥

I. 73. 18. उन्नयन इति ॥ पूर्णान्वानूचो वेति । पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः । ॥

---

१ पूर्वा G (sec. m.); पूर्वो Be; पर्वया H Ben U C D; पूर्वया Bu.

२ Emended; नेयादु॰ H Ben U D C; न्येयादु॰ Be G (sec. m.).

३ ॰त्तरा Be G (sec. m.); ॰त्तरया H Ben U C D G (pr. m.); ॰त्तरया Bu.

४ नेयादु॰ H Ben Bu U C D G (pr. m.); न्येयादु॰ Be G (sec. m.). — Thus G (sec. m.); ॰दुभयत्र Bu; ॰दुभयत्रै Be; ॰दुभये the other MSS.

५ चोर (चोरं, चेरि) कृतं Ben H U G (pr. m.) C D.

६ नेयादु॰ Bu U C D G (pr. m.); नेयदु॰ Ben H; न्येयादु॰ G (sec. m.) Be. — ॰दुभय (instead of ॰दुभयं) H Ben U D C.

७ Thus Bu Be; तत्रतत्रैव Ben G U D C; तत्रतत्र H.

८ Thus (and cp. XX. 22) Bu G and U (sec. m.); ॰ष्ठानोति H Ben C Be, G and U (pr. m.); ॰ष्ठाप्नोति D.

I. 73. 20. संमर्शे[1] इति ॥ स ह स्माह बौधायन उभयꣳ संमृशेच्च स्वाध्यायꣳ सुगतं चेति ॥ सुगतमेवेति शालीकिः । ॥

I. 74. 4. अथ जघनेन गार्हपत्यमुपसादयतीति ॥ स्रुचं बौधायन-स्सौयेणातिहार्येति[2] शालीकिः । ॥

I. 74. 20. हवन इति ॥ स्वयं व्यवेत्य जुहुयादिति बौधायनो । ५ यद्यस्य पुत्रो वान्तेवासी वासंकर्मीणः[3] स्यात्स दक्षिणत आसीनो जुहुयादिति शालीकिः । ॥

ib. आहुत्योर्होम इति ॥ पूर्वापरे जुहुयादिति बौधायनः ॥ अष्टौ[4] इति शालीकिः । ॥

I. 75. 8. द्विरुपमृज्य द्विर्निमृजेदिति बौधायनः ॥ सकृदुपमृज्य १० द्विर्निमृजेदिति शालीकिः । ॥

I. 76. 2. द्विरङ्गुल्या प्राश्योदङ् पर्यावृत्य प्राचीनदण्डया स्रुचा भक्षयतीति ॥ स्रुचं बौधायनस्सौदीचीनदण्डया भक्षयेदिति शालीकिः । ॥

---

१ Thus Bu Be and the vivaraṇa; संमर्शेन H Ben G U D C.

२ Thus (and cp. XX. 8: 21. 4) Bu G and U (sec. m.) ०तिहरेति Be; ०भिहारेति Ben G (pr. m.); ०भिहार्येति H U (pr. m D C corrupt.

३ Thus G U (sec. m.); वासंकर्मीणः Ben; वासंकर्मिणः H; वासंकर्मणः Bu; वासंचर्मणि Be; cp. XX. 2: 6. 12.

४ Thus G (sec. m.) and the vivaraṇa; प्राची H Ben Be U D C; प्राचीष्टौ Bu; cp. XX. 13: 29. 11.

I. 76. 9-13. निर्णिज्य स्रुचं निष्टप्याद्भिः पूरयित्वोदगुद्दिशतीति[१] जघनेन गार्हपत्यमपो निनयतीदमहमग्नौ वैश्वानरे ऽमृतं जुहोमि स्वाहेत्यचित्यामचिताकृतिमिति वेति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः । ॥

I. 76. 18. ५ अग्निपावमानीभिरुपस्थान इति ॥ स ह स्माह बौधायनः संवत्सरं यथोपस्थितमाहवनीयमुपस्थाय तत आग्निपावमानीभिर्गार्हपत्यमुपतिष्ठेताथ गायत्रीभिरथ द्विपदाभिरथ श्वो भूते यथायथमित्य॥न्यो ह स्माह शालीकिर्यत्प्राक् चोर्ध्वं चाग्निपावमानीभ्यस्तेन संवत्सरं यथोपस्थितमाहवनीयमुपस्थाय तत
१० आग्निपावमानीभिर्गार्हपत्यमुपतिष्ठेताथ गायत्रीभिरथ द्विपदाभिरथ श्वो भूते यथायथमित्ये॥वमौपमन्यवो[२] न चास्यात ऊर्ध्वमाग्निपावमान्य आहवनीयमागच्छेयुर्न गार्हपत्यꣳ। स्वाध्यायार्था एवास्यात ऊर्ध्वꣳ स्युरिति[३] ॥ व्याहृतीभिरुपस्थाय भर्तु वः[४] शकेयꣳ श्रद्धा मे मा विगादित्येव ब्रूया-
१५ दित्याश्मौगविः । ॥

I. 79. 4. आग्निःस्विति[५] ॥ स ह स्माह बौधायन आत्मने प्रथम-

---

१ उदगुद्दिशतीति found only in Bu and G (sec. m.). Be and U (sec. m.) have instead बहिर्. About the constitution of the text of this dvaidham and its meaning I am uncertain.

२ All the MSS. exc. G (sec. m.) om. एवम् ।

३ All the MSS. ins. शालीकिर्, which in G is effaced.

४ Effaced in G.

५ आग्नीध्निति MSS.

माश्नासीताथ जातेभ्यो ऽथ तन्नव इत्यौपमन्यवो ह स्माह शालीकिर्जातेभ्य प्रथममाश्नासीताथात्मने ऽथ तन्नव इत्यौपमन्यवो ह स्माहौपमन्यवो ऽजातेष्वेवात्मने[१] च तन्नवे चेति ॥ काममपि सायंप्रातराश्नासीतेत्यौपमन्यवीपुत्रः । ॥ २० ॥

I. 79. 10. पिण्डपितृयज्ञस्य करणं इति ॥ स ह स्माह बौधायन आदित एव प्राचीनावीतं कुर्वीत । स प्राचीनावीत्येव स्यादाहुतीनाꣳ होमादाहुतीर्हुत्वान्यज्ञोपवीतं कुर्वीत । स यज्ञोपवीत्येव स्यादा सकृदाच्छिन्नस्य स्तरणात्सकृदाच्छिन्नꣳ स्तरिष्यन्प्राचीनावीतं[२] कुर्वीत । स प्राचीनावीत्येव स्यादा प्राजापत्यायै । यज्ञोपवीत्येव प्राजापत्यवर्त्मा गार्हपत्यमुपतिष्ठेतेत्यौपमन्यवो ह स्माह शालीकिरादित एव प्राचीनावीतं कुर्वीत । स प्राचीनावीत्येव स्यादा प्राजापत्यायै । यज्ञोपवीत्येव प्राजापत्यवर्त्मोदकुर्यादिति[३] । ॥ १०

तूष्णीꣳ[४] सकृदुत्पूय सकृत्प्रोक्ष्य सकृद्विस्फूर्पं कुर्यादिति बौधायनः ॥ सकृदेवैनान्सुफलीकृतान्कृत्वा पविनवत्ताꣳ स्थाल्यामोप्य स्थालीपाकꣳ श्रपयित्वाभिघार्योदञ्चमुद्वासयेदिति शालीकिः । ॥ १५

१ The avagraha given only by G (sec. m.); to the reading ऽजातेषु the vivaraṇa also seems to point.

२ स्तरीष्य० H Be.

३ Thus G (sec. m.); ०र्त्मोदेयादिति Ben H C D G and U (sec. m.); र्त्मोदकदेयादिति Bu; ०त्मादमेयादिति Be U (pr. m.).

४ Effaced in G.

I. 80. 5. आहुतीनाᳬ होम इति ॥ सूत्रं बौधायनस्य ॥ नात्र मध्यमामाहुतिं जुहुयान्मेक्षणमेव तृतीयᳬ स्यादिति शालीकिः । ॥

I. 80. 9. सकृदाच्छिन्नस्य स्तरण इति ॥ उपनिष्क्रम्याग्न्यगाराद्दक्षिणे ५ पूर्वे ऽवान्तरदेशे सकृदाच्छिन्नᳬ स्तृणीयाद्दक्षिणतश्चोल्मुकमुपनिदध्यादिति बौधायनो ॥ ऽन्तरेवैतां दिशमिति शालीकिर्न चात्रोल्मुकमुपनिदध्यादिति । ॥

I. 80. 11. पिण्डानां दान इति ॥ सूत्रᳬ शालीकेरत्रो ॥ ह स्माह बौधायनः परस्तादेवामुतो ऽर्वाचो ऽपसलैः पिण्डान्दद्या-१० दिति[१] । ॥

I. 80. 20. आञ्जनाभ्यञ्जने मनसो निह्नव[२] इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः । ॥[३]

I. 81. 18. पिण्डानामनुप्रहरण इति ॥ सूत्रᳬ शालीकेरत्रो ॥ ह स्माह बौधायनो ऽत्रैवैते पिण्डाः परिशयीरन्नुच्छिष्टा ह्येते भवन्ति १५ पितृभिर्भक्षंकृता इति[४] । ॥

अतिशिष्टस्य प्राशन इति ॥ स्वयं यजमानः प्राश्नीयादिति बौधायनः ॥ पुत्राय वान्तेवासिने वा दद्यादिति

---

१ पिंडंदद्या॰ MSS. exc. G (sec. m.).

२ निह्नवन G.

३ No vikalpa is found in the text proper of Baudh.

४ Thus H Ben C D G (pr. m.); भक्षंकृत इति Be; भक्षंकृतस्येति G (sec. m.), भक्षकृतस्येति Bu.

शालीकिः॥ पत्नीं प्राशयेत्प्रजास्येषा[१] भवतीत्यौपमन्यवो॥ ऽङ्गुल्या यावन्मात्रमवघ्रायायेतरदग्नावनुप्रहरेदित्यौपमन्यवी- पुत्रो॥ भस्मोत्कर उद्वास्य संप्रक्षाद्येदित्याश्मौगविरपो[२] ऽभ्यवहरेदिति मौद्गल्यः। ॥ २१ ॥

I. 82. 4. आग्रयणस्य तन्त्रसमास इति ॥ नास्ति तन्त्रसमास[३] ५ आचार्ययोरित्रो ह स्माहौपमन्यवः सौम्यं[४] मिदुप्यायेतराणि हवींषि निर्वपेदेवमस्य चरुमुखानि[५] हवींषि भवन्तीत्यत्रो ह स्माहौपमन्यवीपुत्रो ऽतिपातादावापिक एव सौम्यः स्यादन्तरेण वैश्वदेवं चैककपालं च निर्वपेदित्यत्रो[६] ह स्माहाश्मौगविस्त्री- ण्येतानि[७] हवींषि भवन्ति। त्रय इमे लोका। एष्वेव लोकेषु १० प्रतितिष्ठति। श्यामाकेनैवास्य प्रस्तरेणैतदाप्तं भवतीति। ॥

I. 82. 6. अज्यानीनां होम इति ॥ सूत्रं बौधायनस्य॥ पुरस्ता- त्स्विष्टकृतो ऽज्यानीरुपजुहुयादिति शालीकिः। ॥

ib. आग्रयणहविषां श्रपण इति ॥ पयसि श्रपयेदिति बौधायनो॥ ऽप्स्विति शालीकिः। ॥

---

१ Thus Ben Be G U D C; प्राजास्येषा Bu; प्रजास्यैष H.

२ सं (before प्रक्षाद॰) om. H Ben D C U G (pr. m.).

३ इति ins. G and U (sec. m.); but cp. XX. 18: 40. 4.

४ चरुं ins. H Ben U C D G (pr. m.).

५ ॰सुष्काणि Bu D G (sec. m.).

६ Thus (निर्वपेद्) Ben H Be U D C; आपपेद् Bu; effaced in G.

७ Thus without एव, U C D Ben D G (pr. m.) and Keś.; त्रीण्येवै- तानि Be Bu G (sec. m.).

आग्रयण एककपालस्य[१] करण[१] इति ॥ कुर्यादिति बौधायनो ॥ न कुर्यादिति शालीकिः ॥

तन्त्रकरण इति ॥ स ह स्माह बौधायनः पञ्चदशसामिधेनीकाः स्वर्वान्निन्नावाज्यभागावुच्चैर्देवताः । कुर्याद्याज-
५ मानमित्यु ॥ चो[२] ह स्माह शालीकिः सप्तदशसामिधेनीकाः स्वृद्धन्वन्तावाज्यभागावुपांशुदेवताः । कुर्याद्याजमानमिति[२] ।

॥ २२ ॥ सप्तमः ॥

*33. 13, 20.*

विपरिधान[३] इति ॥ स ह स्माह बौधायन आहवनीयेनैकेन विपरिधाय[३] प्रव्रजेत् । प्रोष्य पुनरागम्य[४] सर्वैर्मन्त्रैराहव-
१० नीयं प्रत्युपतिष्ठेतेत्यु ॥ चो ह स्माह शालीकिर्यथोपपन्नमेवाग्निभिर्विपरिधाय[३] प्रव्रजेत् । प्रोष्य पुनरागम्य[५] सर्वैर्मन्त्रैरेकैकं प्रत्युपतिष्ठेतेति ॥

अनुपस्थाय प्रव्रजितस्येति ॥ यत्र स्मरेत्परोचं तत एनं नित्येनोपतिष्ठेतेति बौधायनो ॥ न[६] चेत्स्मरेत्प्रोष्य[६] पुनरागम्य[७]
१५ नित्येनैवेति शालीकिः ॥

---

१ कपालकरण H Ben U D C G (pr. m.).

२ Thus U Be G (sec. m.); the other MSS. या (or य)जमान इति ।

३ ॰परिदान and ॰परिदाय D C.

४ ॰गत्य Bu Ben H U G D C; ॰चम्य Be.

५ ॰गम्य Bu and the vivaraṇa; ॰चम्य Be; ॰गत्य Ben H G U C; D defective.

६ न चेतत्स्म॰ Be Bu G and U (sec. m.); न चैत्स्म॰ D C.

७ ॰गत्य U H Ben G D C.

I. 84. 9.　प्रवसथाकृताविति[१] ॥ स ह स्माह बौधायनो यदि कृतं प्रायश्चित्तꣳ स्यान्नाद्रियेत तत्र होतुमथ यद्यकृतꣳ स्यात्तत्रैनां[२] जुहुयादित्यौपमन्यवो ह स्माह शालीकिर्ये प्रत्याम्नातप्रायश्चित्ता भ्रेषाः[३] स्युस्तान्येव तत्र प्रायश्चित्तानि स्युरथ ये ऽप्रत्याम्नातप्रायश्चित्ता भ्रेषाः[३] स्युर्नैवैनामाद्रियेतेत्यौपमन्यवो[४] ह स्माहौपमन्यवो　५ यदि चैव कृतं प्रायश्चित्तꣳ स्याद्यदि वाकृतं जुहुयादेव तत्र प्रवसथाकृतिमिति शालीकिः ॥

I. 84. 15.　विराजक्रमेष्विति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

I. 85. 6.　अपामाचमन इति ॥ त्रिर्मन्त्रेणाप आचामेत्सकृत्तूष्णीमिति बौधायनः सकृन्मन्त्रेणाप आचामेद्द्विस्तूष्णीमिति　१० शालीकिः ॥

I. 85. 8.　साक्षीकरण इति[५] ॥ स ह स्माह बौधायनः सर्वा एवैता देवताः साक्षिणीः कुर्वीताग्ने व्रतपते व्रतं चरिष्यामीत्यग्निर्वै देवानां व्रतपतिरित्येतदेव[६] नातिमन्येतेति[६] शालीकिः ॥　१५

---

१ Thus emended; प्रवसथाकृति (तौ)ष्विति D C Ben H U (pr. m.); प्रवासादाकृताविति U (sec. m.); प्रवसदाकृताविति G (sec. m.); प्रवसतोकृताविति Bu.

२ °त्रैसा MSS.

३ भेषा MSS.

४ Thus C H Ben G U (pr. m.) D (sec. m.); नैवैनामा° Be; नैमेनामा Bu D (pr. m.); नेवैनामामा° U (sec. m.).

५ साक्षी° Bu H and the vivaraṇa (one copy); साक्षि° Ben Be C D G U and the vivaraṇa (another copy).

६ Thus Bu Ben U G D C; °देवानातीममन्येवेति H; °देवानामि° Be.

I. 85. 17; 86. 5. कपाले नष्टे भिन्ने वेति ॥ सूत्रमाचार्ययोर्॥चो ह स्माहौपमन्यवो मनो ज्योतिर्जुषतां त्रयस्त्रिꣳशत्तन्तव इत्येते स्रुवाहुती हुत्वाथान्यदपिसृजेद्धर्मा देवाꣳ अप्येत्विति । स एष मन्त्रो भवति सं त्वा सिञ्चामि यजुषेति । पयो वाज्यं ५ वासिक्तमेतेनैव मन्त्रेण सꣳसिञ्चेदिति । ॥

I. 87. 3. आज्यग्रहाणां ग्रहण इति ॥ स ह स्माह बौधायनो ऽध्वर्युरेवोभयैर्मन्त्रैर्गृह्णीयात्पौरोडाशिकैश्च याजमानैश्च । याजमानैर्यजमानो ऽनुमन्त्रयेतेत्य॥चो ह स्माह शालीकिरध्वर्यु-रेवोभयैर्मन्त्रैर्गृह्णीयात्पौरोडाशिकैश्च याजमानैश्च । न याज-१० मानैर्यजमानो ऽनुमन्त्रयेतेत्य॥चो ह स्माहौपमन्यवो यथापि पौरोडाशिका मन्त्रा नाभिवर्तन्त[१] एवमेवापि याजमाना मन्त्रा नाभिवर्तेरन्निति[१] । ॥

I. 87. 14. परिधीनां परिधान इति ॥ स ह स्माह बौधायनो ऽध्वर्युरेवोभयैर्मन्त्रैः परिदध्यात्पौरोडाशिकैश्च याजमानैश्च । १५ याजमानैर्यजमानो ऽनुमन्त्रयेतेत्य॥चो ह स्माह शालीकिरध्वर्यु-रेवोभयैर्मन्त्रैः परिदध्यात्पौरोडाशिकैश्च याजमानैश्च न याज-मानैर्यजमानो ऽनुमन्त्रयेतेत्य॥चो ह स्माहौपमन्यवो यथापि पौरोडाशिका मन्त्रा नाभिवर्तन्त[१] एवमेवापि याजमाना मन्त्रा नाभिवर्तेरन्निति[१] । ॥

I. 88. 2. २० समिधोरभ्याधीयमानयोर्जपतीति ॥ सूत्रं बौधायनस्य ॥ सर्व एवैषो ऽग्नियोजनो मन्त्रः स्यादिति शालीकिः । ॥ २३ ॥

---

[१] G and U (sec. m.) each time नाभिनिव°, Bu the second time.

I. 88. 8. अथ भूर्भुवः सुवरित्यग्निहोत्रमेताभिर्व्याहृतीभिरुपसादये-
दिति ॥ स एवमेव संवत्सरेसंवत्सर इति सूत्रꣳ शालीकेर्बो
ह स्माह बौधायनो यस्याꣳ रात्र्यामादित उपसादयेत्संवत्सरे
पर्यवेते तस्यामुपसाद्य न तत ऊर्ध्वमाद्रियेतेत्यौ ह स्माहौ-
पमन्यवो ऽभ्यारूढः खल्वस्यैव[1] संवत्सरो भवति । यस्याꣳ ५
रात्र्यामादित उपसादयेत्संवत्सरे पर्यवेते या ततः पूर्वा रात्रिः
स्यात्तस्यामुपसाद्य न तत ऊर्ध्वमाद्रियेतेति । ॥

I. 88. 11. दर्शपूर्णमासावालभमान एताभिर्व्याहृतीभिर्ध्रुवीꣳष्यासाद-
येदिति ॥ स एवमेव संवत्सरेसंवत्सर इति सूत्रꣳ शालीके-
र्बो ह स्माह बौधायनो यस्यां पौर्णमास्यामादित आसा- १०
दयेत्संवत्सरे पर्यवेते तस्यामासाद्य न तत ऊर्ध्वमाद्रियेतेत्यौ
ह स्माहौपमन्यवो ऽभ्यारूढः खल्वस्यैव[2] संवत्सरो भवति ।
यस्यां पौर्णमास्यामादित आसादयेत्संवत्सरे पर्यवेते या
ततः पूर्वा पौर्णमासी स्यात्तस्यामासाद्य न तत ऊर्ध्व-
माद्रियेतेति । ॥ १५

I. 88. 15. चातुर्मास्यान्यालभमान एताभिर्व्याहृतीभिर्ध्रुवीꣳष्यासादये-
दिति ॥ स एवमेव संवत्सरेसंवत्सर इति सूत्रꣳ शालीकेर्बो
ह स्माह बौधायनो यस्यां पौर्णमास्यां वैश्वदेवहवीꣳष्यासादये-

---

१ एवं (एवꣳ) instead of एव Be G U C D Bu ; the passage is missing in H Ben.

२ एव Be H Ben U ; एवं Bu D G C.

त्संवत्सरे[१] पर्यवेते तस्यां[१] वैश्वदेवहवीꣳष्यासाद्य[१] न तत ऊर्ध्वमाद्रियेतेत्यौपमन्यवो ह स्माहौपमन्यवो ऽभ्यारूढः खल्वस्यैव[२] संवत्सरो भवति । यस्यां पौर्णमास्यां वैश्वदेवहवीꣳष्यासादयेत्संवत्सरे पर्यवेते या ततः पूर्वा पौर्णमासी स्यात्तस्याꣳ शुना-
५ सीरीयहवीꣳष्यासाद्य न तत ऊर्ध्वमाद्रियेतेति ।

I. 88. 21. व्याहृतीनां धान इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

I. 90. 15. प्राशित्रे ऽवदीयमाने जपतीति ॥ सूत्रं[३] मैत्रेयस्यौपाचार्ययोः[३] प्राशित्रे ऽवदीयमाने जपत्यग्निर्मा दुरिष्टात्पातु
१० सविताघशꣳसादिति ॥

I. 90. 17. यजमानभागे यो मे ऽन्ति दूरे ऽरातीयति तमेतेन जेषमिति ॥ सर्व एवैष स्विष्टकृदनुमन्त्रणो मन्त्रः स्यादित्यौपमन्यवः ॥

I. 92. 6. वेदे यजमानं वाचयतीति ॥ सूत्रꣳ शालीकेरित्यौ ह
१५ स्माह बौधायनो वेदे यजमानं वाचयति वेदो ऽसि वित्ति-

---

१ In G this passage has been changed in the following way: °सादयेदिति स संवत्सरे पर्यवेते तस्यां शुनासीरीयहवींष्यासाद्य; in U it runs: °सादयेत्संवत्सरे पर्यवेते तस्यां पौर्णमास्यां शुनासीरीयहवींष्यासाद्य; possibly G and U are right in reading (l. 1) शुनासीरीय° instead of वैश्वदेव°।

२ स्वयं Ben G.

३ Thus Bu G (sec. m.); सूत्रमात्रेयस्याथ° the other MSS.

रमि विदेयेति ' यद्यङ्गादव्यस्याभिध्यायेत्तस्य[1] नाम गृह्णीया-
त्तदेवास्य सर्वं वृक्ता इति ' ॥

अथ यदि यजमानः सुरापो वा भवति प्रवसति वेति ॥
स ह स्माह बौधायनः प्रवसतः प्रस्तरेणैवास्य सह यजमान-
भागमनुप्रहरेद्ध्रुवायै वाज्येन पर्युपस्तीर्य शुक्लामवधाय शुक्ल- ५
यात्प्रस्तरभूयं[2] यजमानभागो गच्छतीत्यत्रो[3] ह स्माह
शालीकिरादित एव न सुरापेण संसृज्येताथ चेत्संसृज्येत
मन्त्रान्नु हैनं वाचयेत्किमु भक्षान्[4] भक्षयेदिति[4] '' भक्षयेत्त्वेव
भक्षानित्यौपमन्यवः ' ॥

I. 93. 7. आदित्यस्योपस्थान इति ॥ उपनिष्क्रम्याग्न्यगारादादित्य- १०
मुपतिष्ठेतेति बौधायनो '' ऽत्रैव तिष्ठन्निति शालीकिः ' ॥

पौर्णमास्यामुपवेषस्य करण इति ॥ कुर्यादिति बौधायनो ''
न कुर्यादिति शालीकिः ' ॥

I. 94. 9. व्रतविसर्ग इति ॥ मन्त्रेणाप आचम्य मन्त्रेण व्रतं विसृजे-
तेति[5] बौधायनस्तूष्णीमप आचम्य मन्त्रेण व्रतं विसृजेतेति १५
शालीकिरुपवेषेण चरित्वा व्रतं विसृजेतेत्यौपमन्यवः ' ॥

---

१ यद्य twice in Bu G (sec. m.), once in the other MSS.

२ ०भूयं U Bu G (sec. m.); भागं Ben H C D G (pr. m.); Be uncertain.

३ गमच्छती G (sec. m.).

४ भक्षानभक्ष० Bu, भक्षान्भक्ष० Be.

५ Here and *infra* only Be has the medium, the other MSS. have the active.

I. 94. 12. यज्ञस्य पुनरालम्भं जपतीति ॥ सूक्तं बौधायनस्याहवनीय-
मेवैतेन यजुषोपतिष्ठेतेति शालीकिः ॥ २४ ॥ अष्टमः ॥

I. 107. 1. अथातः पशुबन्धं व्याख्यास्यामः ॥

स ह स्माह बौधायनः सोपवसथा इष्टिपशुबन्धा इति ॥
५ सोपवसथा[१] वा[१] सद्योयज्ञा[१] वेति[१] शालीकिः ॥

इष्टिकरण इति ॥ पशौपशावेवाग्नेयेनाष्टाकपालेन यजे-
तेति बौधायनो बभ्रुकर्णो चैवैतद्जवशायां[२] च दृष्टं
भवतीति शालीकिः ॥

स्फ्यो यूपो भवतीति ॥ स्फ्यप्रकार[३] एवायं चषालवान्यूपो
१० भवतीति बौधायनो[४] ऽस्फ्य[४] एवायमग्न्यगारिको ऽचषालो
यूपः स्यादिति शालीकिः ॥

विशाखो यूपो भवतीति ॥ ऊर्ध्वं रशनाकालाद्द्वे[५] शाखे
चतुरस्रे चतुरस्रचषाले[६] स्यातामथेतरो ऽष्टाश्रिर्यूपः स्यादिति

---

१ Thus G (sec. m.) and Bu (the last MS. reading, however, ०यज्ञौ); सोपवसथासद्योज्ञाश्चेति Ben U D C; सोपवसथाथोवासद्योयज्ञाश्चेति H; सोपवसथीः सद्योयज्ञाश्चेति Be; cp. Rudradatta on Āp. VII. 6. 3.

२ ०द्जवशा० Bu G (pr. m.); ०द्जावशा० Ben U C D G (sec. m.); ०ह्यवशा० Be; ०दंडावशा० H.

३ स्फ्याकार G D, स्फ्यकार C.

४ Thus Be (without, however, the avagraha); ०धायन (or नः) स्फ्य the other MSS.

५ ०कालाद्वे MSS.

६ Thus Be; चतुरस्रेरचषाले H; चतुरस्रे (चे)चषाले the other MSS.

बौधायनः ॥ शाखेयमचषाला स्यादथेतरोऽष्टाश्रिर्यूपः स्यादिति शालीकिः ॥

I. 107. 6. सकृत्करण इति ॥ सूत्रं बौधायनस्य ॥ श्रौत्रीणामपि कुर्यादिति शालीकिः ॥

I. 107. 8. षड्ढोतुर्होम इति ॥ सूत्रं बौधायनस्योपवसथ एव षड्ढोतारं जुहुयादिति शालीकिः ॥ ५

I. 107. 10. यूपाहुत्ये हवन इति ॥ सूत्रꣳ शालीकेरथो ह स्माह बौधायन आज्यं चारणी चादाय यूपस्यान्तिकेऽग्निं मथित्वा यूपाहुतिं जुहुयादिति ॥

I. 108. 4. आवश्चनस्याभिहोम इति ॥ सूत्रꣳ शालीकेरथो ह स्माह बौधायन एवमेव जुह्वामन्तर्धाय हिरण्यमभिजुहुयाद्वनस्पते शतवल्शो विरोह स्वाहेति सहस्रवल्शा वि वयꣳ रुहेमेत्यात्मानं प्रत्यभिमृशेताथोदकꣳ[१] स्पृशेदिति ॥ १०

I. 108. 12. यूपस्यावाहन इति ॥ यः प्राङ् वोदङ् वा पतेत्तमावाहयेदिति बौधायनो ॥ यां[२] कां[२] चिद्दिशमभि पतेताव्यापन्नस्त्स्यादावाहयेदेवेति शालीकिः ॥ १५

I. 108. 13. वेद्यै करण इति ॥ सूत्रमौपमन्यवीपुत्रस्याथो ह स्माह बौधायनो रथसंमिता स्याद्रथाक्षेण पश्चात्तिरश्ची रथेषया

---

१ Thus (and cp. Vol. I, p. 108, 7, medium!) Bu G (sec. m.); ॰स्पृशती॰ Be; ॰स्पृशेदि॰ the other MSS.

२ यांकांचद्दिशम॰ G (sec. m.).

प्राची रथयुगेन[१] पुरस्तात्तिरश्युत्तरयुगेनोत्तरनाभिरिति[२] ॥ चतुर्निमिता वा स्यात्सर्वतो वा दशपदा विराट्संपन्नेति[३] शालीकिः । ॥ २५ ॥

I. 109. 3. शालालस्य परिलेखन इति ॥ सूत्रं शालीकेर्'त्रो ह ५ स्माह बौधायन एवमेव परिलिखन्बाह्यतः[४] पुरस्ताच्चोत्तरतश्चालिखेदिति । ॥

लोकाग्नीनां हरण इति ॥ सूत्रं शालीकेर्'त्रो ह स्माह बौधायन उत्तरवेद्यामाग्नीध्रमुपवेश्य[५] ततो लोकाग्नीन्हरेदित्युद्दिशादेव लोकाग्नीन्हरेदित्यौपमन्यवः । ॥

I. 110. 1. १० उत्तरवेद्यै परिमाण इति ॥ सूत्रं शालीकेर्'त्रो ह स्माह बौधायनो रथसंमितायामेव धौरेयशम्यया परिमिमीत[६] । नात्र मध्यमा वेदिर्भवतीति । ॥

I. 110. 4; III. 7. 13. आख्यातं यूपावटस्य परिलेखनम् ॥

---

१ ०युगेण Bu.

२ उत्तरयुगेण all the MSS. (exc. U sec. m.) and the vivaraṇa.

३ Thus G; विराट्संमितेति U (sec. m.); विराट्संपन्नेति H Ben D Be CU (pr. m.); विराट्सन्नेति Bu.

४ Thus Be DC; ०लिखचाह्यतः H; ०लिखवाह्यतः Ben; ०लिखेवावाह्यतः Bu; ०लिखेत्वाह्यतः G (sec. m.) U.

५ Thus Bu and a bhāṣya in the Bombay MS. class I B 5; ०ध्रमुपविश्य Be; ०ध्र उपविश्य Ben HUDC; ०ध्रं उपविश्य G.

६ Thus Bu G (pr. m.); ०मिमीते the other MSS.

I. 110. 1. उत्तरवेद्या अलंकरण[१] इति ॥ सूत्रं बौधायनस्य ॥ पूर्वं युगे वोत्तरनाभिं परिनिस्तिष्ठेदिति शालीकिः । ॥

I. 110. 13. स्फ्येनाग्नीध्रो निघ्नन्नेति होतुः पदानीति ॥ सूत्रं शालीकेर्वो ह स्माह बौधायनः पदात्पदं पांसूनुपसंहृत्य[२] तानुत्तरेणोत्तरनाभिमतिकिरेदिति । ॥ ५

I. 110. 16 उत्तरवेद्यै प्रोक्षण इति ॥ सूत्रं शालीकेर्वो ह स्माह बौधायनो मन्त्रानुदिश्यं चैनां प्रोक्षेन्मन्त्रानुलोकं चेति । ॥

I. 110. 20. अतिशिष्टानां निनयन इति ॥ वेद्यै दक्षिणेऽंसे निनयेदिति बौधायन ॥ उत्तरवेद्या इति शालीकी ॥ रथसंमितायामेव दक्षिणमंसमुपनिनयेदित्यौपमन्यवः । ॥ १०

I. 111. 1. उत्तरवेद्यै व्याघारण इति ॥ सूत्रं बौधायनस्य ॥ प्रत्यनीकेष्वेनां[३] व्याघारयेदिति शालीकिर्हुत्वैव व्याघारयन्मध्ये हुत्वोत्तरमंसमभिजुहुयादित्यौपमन्यवः । ॥

I. 111. 11. इध्मस्य निधान इति ॥ सूत्रं बौधायनस्य ॥ तूष्णीमेवैषां निदध्यादिति शालीकिः । ॥ १५

I. 111. 14. अध्वराहुतीनां होम इति ॥ सूत्रं बौधायनस्य ॥ चत्वारि चतुर्गृहीतानि जुहुयादिति शालीकिः । ॥

I. 112. 11. पृषदाज्यग्रहणे संमार्जनसादन इति ॥ सूत्रं बौधायनस्य ॥

---

१ •कार Bu. Be.

२ •समुपसंहृत्य Be; •मुपहृत्य GU (sec. m.); •मुपसंहृत्य Bu H Ben U (pr. m.) DC.

३ प्रत्यनीके• Bu Ben HC; प्रध्वनीके• Be; पश्चनीके• D; प्रत्यनीके• GU, the vivaraṇa and the bhāṣya.

लभेतौपभृते[१] संमार्जनसादने इति शालीकिर्न संमृजेदि-
त्यौपमन्यवः ॥

I. 1[illegible] 13. पृषदाज्यस्य ग्रहण इति ॥ सूत्रं बौधायनस्य ॥ हृदयान्तेन
गृह्णीयादिति शालीकिः ॥ सम्भृज्याज्यं च दधि चैतैः पञ्च-
५ भिर्गृह्णीयादित्यौपमन्यवो ॥ ऽत्रो ह स्माहौपमन्यवीपुत्रस्तूष्णीं
द्विरुपस्तीर्य सर्वैर्मन्त्रैर्दध्यानीय तूष्णीं द्विरभिघारयेदिति ॥

पृषदाज्यस्य प्रायश्चित्तकरण इति ॥ ग्रहणादग्याचरणा-
दचैवास्य[२] प्रायश्चित्तं कुर्वीतेति बौधायनः ॥ सादनादग्या[२]
चरणादचैवेति[३] शालीकिर्न तु इषितमाच[४] इत्यौपमन्यवः[४] ॥

I. 113. 7. १० यूपस्य प्रक्षालन इति ॥ सूत्रं बौधायनस्य ॥ तूष्णीमेव
यूपं प्रक्षालयेदिति शालीकिः ॥

I. 113. 10. यूपस्य प्रोक्षण इति ॥ स ह स्माह बौधायनः स्वरुरशनं
मैत्रावरुणदण्डं यूपशकलꣳ हिरण्यमुदपात्रमित्येतत्संनिधाय
यूपं प्रोक्षेदित्येवं यूपेन यूपसंयोजनानि प्रोक्षेत्पशुना पशु-
१५ संयोजनानीति शालीकिः ॥

---

१ Thus the vivaraṇa; °तौपभृते Bu; तौपभृतः the other MSS.; cp. Kāty. V. 4. 28.

२ Or are we to write °दग्याचरणा°? The meaning of this passage is not clear to me.

३ चाच effaced in G.

४ Meaning and reading uncertain; इषतिमाच इ° G (sec. m.) and the bhāṣya; इषितमाचे the vivaraṇa; इषतपाच इ° Bu; इषतिमाच इ° Be; पषितमाचमि° Ben HCDG (pr. m.); पतितमाच° U.

I. 113. 18. यूपस्य परिक्रमण[1] इति ॥ दक्षिणेनेति बौधायन॥ उत्तरेणेति शालीकिः। ॥

I. 114. 2. यूपस्याञ्जन इति ॥ सूत्रं बौधायनस्याग्निष्ठामेवेति शालीकिः। ॥

उदपात्रस्योपनिनयन इति ॥ प्रदक्षिणमुपनिनयेदिति ५ बौधायनो॥ यथोपपादमिति शालीकिः। ॥

I. 114. 16. यूपस्य परिव्ययण इति ॥ त्रिरेव मन्त्रं ब्रूयात्त्रिः कर्मावर्तयेदिति बौधायनः॥ सकृदेव मन्त्रं ब्रूयात्सकृत्कर्मेति[2] शालीकिः। ॥

*ib.* नाभिदघ्ने परिव्ययतीति ॥ सूत्रं बौधायनस्य॥ मध्यदेश १० इति शालीकिः। ॥ २६ ॥

I. 114. 21. स्वरोरवगूहन इति ॥ सूत्रं बौधायनस्याग्निष्ठां प्रतीति शालीकिः। ॥

I. 115. 2. पशोरुपाकरण इति ॥ सूत्रमौपमन्यवीपुत्रस्यात्रो ह स्माह बौधायन एवमेवोपाकुर्यान्न तु जोषयेदिति॥ जोषयेत्त्वेव शुक्र- १५ याश्चोपाकरणायेति शालीकिरत्रो ह स्माहौपमन्यव एवमेवेनं पुरस्तात्प्रत्यगावृत्तं[3] बर्हिर्भ्यां च प्लक्षशाखया चाभिषेधेत्तस्यां[4] च प्लक्षशाखायाꣳ हृदयं निधायावद्येदिति। ॥

---

१ Thus Ben HDCUG (pr. m.) and the vivaraṇa; ॰क्राम G (sec. m.); ॰क्रम Bu Be.

२ ब्रूयात्त्रिः कर्मेति G (sec. m.)

३ Thus DGU; ॰वर्तं Bu; ॰वृत्तं the other MSS.

४ Thus H Ben DCBe G (pr. m.) and the vivaraṇa; ॰भिषेधे॰ G (sec. m.); ॰भिषधे॰ U; B has a lacuna.

I. 115. 9. अरण्योः समञ्जन इति ॥ सूत्रꣳ शालीकेरृचो ह स्माह बौधायनो ऽग्नेर्जनित्रमसीति शकलमाददीत । वृषणौ स्थ इति दूर्वे[1] वा शकले वा [2]निदध्यादुर्वश्यसीत्यधरारणिमाददीत । पुरूरवा इत्युत्तरारणिमथैने आज्यस्थाल्याꣳ समज्य[3]

५ घृतेनाक्ते वृषणं दधाथामिति समवदध्यादिति ॥

I. 115. 15. पशुरशनाया आदान इति ॥ मन्त्रेणाददीतेति बौधायनस्तूष्णीमिति शालीकिः ॥

I. 115. 16. पशोरभिधान इति ॥ सूत्रं बौधायनस्य ग्रीवायामेवाभिदध्यादिति[4] शालीकिः ॥

I. 115. 19. १० पशोर्नियोजन इति ॥ सूत्रं बौधायनस्य यूप एव पशुं नियुञ्ज्यादिति शालीकिः ॥

*ib.* पशोः प्रोक्षण इति ॥ तूष्णीꣳ सꣳस्कृताभिरद्भिः प्रोक्षेदिति बौधायनः कमण्डलुभिरिति[5] शालीकिः ॥

I. 116. 7. पशोः समञ्जन इति ॥ सूत्रꣳ शालीकेरृचो ह स्माह

१५ बौधायनो ललाटे स्रुचं प्रतिष्ठाप्यानुच्छिन्दन्कर्षेदा दक्षिणाया श्रोणेरिति ॥

---

१ पूर्वे Be Ben U (pr. m.).

२ वानुनिदध्या॰ Be U (sec. m.).

३ Thus HD; समंज्य U Ben; समज्य C; समंज्याद् Be; समनक्ति Bu (sec. m.).

४ Thus G and U (sec. m.) and the vivaraṇa; ग्रीवायामेनमभि॰ the other MSS.

५ Thus D Bu; कमंडलुभि॰ GUC (sec. m.); कामंडलुभि॰ the other MSS.

स्वरुश्मनस्योत्पादन इति ॥ यूपः स्वरुश्मनमुत्पादयेदिति बौधायनः ॥ पशुरिति शालीकिस्तन्त्रमित्यौपमन्यवो ॥ देवते-त्यौपमन्यवीपुत्रः ॥ २७ ॥ नवमः ॥

I. 116. 13. अत्याश्रावण इति ॥ सूत्रं बौधायनस्य ॥ सोम एवात्या-श्रावयेदिति शालीकिः । ॥ ५

I. 117. 2. पशोः समञ्जन इति ॥ स ह स्माह बौधायनो यया[1] समञ्ज्यात्[2] तया[1] विशस्यात्[3] त्वेतया[1] प्रतस्यावद्येदिति ॥ यथोपपादमिति शालीकिः । ॥

I. 117. 4. पशोः पर्यग्निकरण इति ॥ सहशामित्रं पर्यग्नि कुर्या-दिति बौधायनो ॥ यदन्यच्छामित्रादिति शालीकिः ॥ पशुं १० पाज्यानि चेति राथीतरः ॥ पशुमेवेत्यौपमन्यवः । ॥

I. 117. 6. अपाव्यानाꣳ होम इति ॥ स ह स्माह बौधायन एकं प्रथमे पर्याये जुहुयाद्द्वे मध्यमे द्वे उत्तम इति ॥ यथोप-पादमिति शालीकिः । ॥

I. 117. 12. उपप्रैषाश्रावण इति ॥ सूत्रं बौधायनस्य ॥ नाश्रावये- १५ दिति शालीकिः । ॥

I. 117. 17. पशोर्निहनन इति ॥ प्रतीचीनशिरसमुदीचीनपादमिति

---

१ यथा and तथा (instead of यया and तया) some of the MSS.

२ समंज्यात्तया Bu.

३ विशंस्या° all; विशसनं न कुर्यात् the vivaraṇa; cp. Āp. VII. 14. 13 and Bhāradvāja VI. 11: या स्वन्ना धारा तया पशुꣳ समनक्ति तयैव हविषः प्रतस्यावद्यत्यन्यया विशस्ति यथाकामी विशसन इत्यपरम् ।

बौधायन " उदीचीनशिरसं प्रतीचीनपादमिति शालीकिः "
प्राचीनशिरसमुदीचीनपादमित्यौपमन्यवः ' ॥

I. 118. 5. पशुरशनाया उद्सन इति ॥ चात्वाले रशनामुदस्येदिति
बौधायनो " ऽद्भिरभ्युक्ष्यासंचर[१] इति शालीकिः ' ॥

I. 118. 9. ५ पत्न्या उदानयन इति ॥ सूत्रं शालीकेरचो ह स्माह
बौधायनो ऽनर्वा प्रेहीत्येनां प्रणयेदथैनामादित्यमुदीच्यानर्वा
प्रेहीत्येव प्रणयेदिति ' ॥

118. 10. अपामवेक्षण इति ॥ उपरिष्टाच्चात्वालस्यावेक्षयेदिति
बौधायनः ' पार्श्वतः पशोरिति शालीकिः ' ॥

I. 119. 6 १० बर्हिषः समञ्जन इति ॥ सूत्रं शालीकेरचो ह स्माह
बौधायनस्तथाक्रमेवेतरस्यादितरत एवैनदक्त्वा निरस्येद्धचर्मा
भागो ऽसीत्यथोदकं स्पृशेदिति ' ॥ २८ ॥

वपायाः प्रदान इति ॥ आज्यस्रुवा वा स्रुग्घिरण्यं वा[२]
द्वितीये चतुर्थे चेति " पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ' ॥

I. 121. 4. १५ पशुपुरोडाशस्य निर्वपण इति ॥ सूत्रं बौधायनस्य "
पशुमालभ्य पुरोडाशं निर्वपेदिति शालीकिः ' ॥

I. 121. 5. पशोः प्रच्यावन इति ॥ हृदयजिह्वे[३] प्रच्यावयेदिति
बौधायनो " हृदयमेवेति शालीकिः ' ॥

---

१ हिरभ्युक्ष्य H Ben DCG (pr. m.).

२ Found only in G and U (sec. m.) and the vivaraṇa; cp. also Rudradatta on Āp. VII. 20. 9.

३ हृदयं जिह्वां Bu G and U (sec. m.) Keś.; हृदयं जिह्वे U (pr. m.); हृदयजिह्वा D.

I. 121. 10. हृदयस्य श्रपण इति ॥ सूत्रꣳ शालीकेरꣳ चो ह स्माह बौधायनः शूलपाक्यमेवैनच्छ्रपयेदद्वैव हृदयशूलं परिनिस्तिष्ठे-दुपरिष्टाच्च मन्त्रेणोपस्पृशेदिति[1] ॥

I. 121. 13. पशुपुरोडाशस्येडाया अवदान इति ॥ सूत्रꣳ शालीकेरꣳ चो ह स्माह बौधायनो निरवदायैवास्य स्विष्टकृतमिडामवद्येदेवꣳ ५ सवनीयानामिति ॥

I. 122. 2. इडसूनस्य करण इति ॥ सूत्रं बौधायनस्य बर्हिष्येव प्रचशाखायाꣳ हृदयं निधायावद्येदिति शालीकिः ॥

I. 122. 3. पशोः संवदन इति ॥ सूत्रꣳ शालीकेरꣳ चो ह स्माह बौधायनः[2] पृष्ठाभिक्रामेत्यूषा[3] मा पशुपाः पात्विति । द्वितीयं १० पृष्ठाभिक्रामेत्यूषा[3] मा प्रपथे पात्विति । तृतीयं पृष्ठाभिक्रामे-त्यूषा[3] माधिपतिः पात्विति ॥

I. 122. 9. पशोरभिघारण इति ॥ सूत्रं बौधायनस्य पृषदाज्येन हृदयमभिघार्याज्येनेतराण्यभिघारयेदिति शालीकिः ॥

पशोरासादन इति ॥ पशुहोचासादयेदिति बौधायन- १५ स्तूष्णीमिति शालीकिः ॥

I. 122. 17. पशोरवदान इति ॥ स ह स्माह बौधायनो हृदयस्य

---

१ संस्रेणोपः स्पृ॰ G (sec. m.) U Bu; संस्रेणाप (पः) स्पृ॰ Be G (pr. m.) DC Ben H (मन्त्रेणोपस्पर्शनम् the vivaraṇa).

२ प्रथमं ins. DC.

३ Thus Bu G (sec. m.); ॰तिक्रामे॰ U Be Ben H; ॰भिष्क्रामे॰ DC, but cp. Āp. VII. 23. 6 अभिप्रव्रजति with Rudradatta's remark.

भिक्षाया वचस इत्येतेषामेवानुपूर्वमवद्येत्तृतीयं[१] चाचावदानं पञ्चावत्तिनां कुर्यादित्यु॥ चो ह स्माह शालीकिः सर्वेषामेवानुपूर्वमवद्येञ्च चाच तृतीयमवदानं पञ्चावत्तिनां कुर्यादिति । ॥ २९ ॥

I. 123. 9. ५　पशोः संमर्शन इति ॥ स ह स्माह बौधायन उभयानि[२] संमृशेद्येभ्यश्चावद्येत्स्रुगतानि चेति ॥ स्रुगतान्येवेति शालीकिः । ॥

I. 123. 13.　कुम्भतः श्रोणातीति ॥ सूत्रं बौधायनस्य ॥ समस्तेनैवास्य पार्श्वेन वसाहोमं श्रोणीयादिति[३] शालीकिः । ॥

I. 123. 16. १०　पशोः प्रतिपरिहरण इति ॥ प्रतिपरिहरेदिति[४] बौधायनो ॥ न प्रतिपरिहरेदिति शालीकिः । ॥

I. 123. 17.　अत्याक्रमण इति[४] ॥ सूत्रं बौधायनस्य ॥ जघनेनोत्तरवेदिं परिक्रम्याश्रावयेदिति शालीकिः । ॥

I. 124. 4.　दिशां प्रतीज्याया इति ॥ सूत्रं शालीकेर्॥ चो ह स्माह १५ बौधायनः पुरस्ताद्वनस्पतेः समान्यो दिशः प्रतियजेद्दिग्भ्यः स्वाहेति । कृत्वोपतिष्ठेत[५] स्वाहा दिग्भ्यो नमो दिग्भ्य इति । ॥

---

१ एतेषाम् Bu G (sec. m.); एषाम् the other MSS.

२ Thus Bu G (sec. m.); सर्वाणि the other MSS.

३ श्रिणीयादिति Bu; श्रोणातीति the other MSS.

४—४ The words प्रतिपरि० ... ०क्रमण इति left out by all the MSS, exc. Bu and G and U (sec. m.).

५ ०तिष्ठते MSS.

I. 124. 7. वनस्पतेस्स्वर्याया इति ॥ सूत्रं बौधायनस्य ॥ पृषदाज्या-च्चतुर्गृहीतेन चरेदिति शालीकिः ।॥

I. 124. 13. वनिष्ठोराधान इति ॥ षड्वत्तꣳ संपादयेदिति बौधा-यनः ॥ सकलमेवेति शालीकिः ।॥

I. 124. 18. औपयजेष्विति ॥ सूत्रꣳ शालीकेर्'बो ह स्माह बौधायन ५ आहवनीयादेवोदीचो ऽङ्गारान्निर्वर्त्य तेषूपयष्टोपयजेदिति ।॥

I. 125. 2. गुदस्तीय इति ॥ एकादशधा कृत्वोपयष्टोपयजेदिति बौधायनो ॥ ऽपच्छेदमिति[१] शालीकिः ॥ समस्तमेवैनमनु-प्रहृत्य[२] सर्वैर्मन्त्रैरनुमन्त्रयेतेत्यौपमन्यवः ।॥

I. 125. 4. अथ बर्हिषि हस्तौ निमार्ष्टीति ॥ सूत्रं बौधायनस्यापो १० ऽप्यस्मा[३] अत्रानयेयुरिति[३] शालीकिः ।॥ ३० ॥

I. 125. 6. स्वरोर्होम इति ॥ सूत्रं बौधायनस्य ॥ चतुर्गृहीते ऽवधाय जुहुयादिति शालीकिः ।॥

I. 125. 10. पत्नीनाꣳ संयाजन इति ॥ सूत्रं बौधायनस्यांस्येमेव[४] पत्नीः संयाजयेदिति शालीकिः[४] ।॥ १५

---

१ ०वच्छेदमिति Ben, with प the other MSS. and the vivaraṇa cp. XX. 12: 26. 12, XXII. 15 s. f.

२ ०मेवैतमनु Bu G (sec. m.); ०मेवैतदनु० H Ben Be CDUG (pr. m.)

३ चात्रा चत्रानये० G (sec. m.) Ben; प्यात्रा चत्रानये० CD; चाप्यत्रा चत्रानये० Bu; यत्रा चत्रानुनये० H; तत्रानये० Be; चत्रा चत्रानये० U.

४ आचार्ययोः instead of बौधायनस्य and औपमन्यवः instead of शालीकिः G (sec. m.).

125. 11. उत्तानायै जाघन्यै देवानां पत्नीर्यजति नीच्या अग्निं गृहपतिमिति ॥ सूत्रं बौधायनस्य ॥ सर्वमेवैतदुत्तानायै जाघन्यै कुर्यादिति शालीकिः । ॥

125. 12. उत्तानायै जाघन्यै होत्र इडामवद्यति[१] नीच्या[२] अग्नीधे[२] ५ षडवत्तमिति ॥ सूत्रं बौधायनस्य ॥ सर्वमेवैतदुत्तानायै जाघन्यै कुर्यादिति शालीकिः । ॥

I. 125. 15. फलीकरणहोमस्य करण इति ॥ कुर्यादिति बौधायनो ॥ न कुर्यादिति शालीकिः । ॥

I. 125. 16. ध्रुवाया आप्यायन इति ॥ स ह स्माह बौधायन उभावेव १० ध्रुवामाप्याययेतामध्वर्युश्च यजमानश्चेत्य॥ध्वर्युरेव ध्रुवामाप्याय्य समिष्टयजूंषि जुहुयादिति शालीकिः । ॥

समिष्टयजुषां होम इति ॥ सूत्रं बौधायनस्य ॥ त्रीणि चतुर्गृहीतानि जुहुयादिति शालीकिः । ॥

I. 126. 6. हृदयशूलस्योद्वासन इति ॥ कुर्वीताच्च सुमित्रा न दुर्मित्रा- १५ स्येति बौधायनो ॥ न कुर्वीतेति शालीकिः । ॥

I. 126. 10. समिधां करण इति ॥ सर्व एवार्द्राः सपलाशाः कुर्वीर- न्निति बौधायनो ॥ यजमानस्यैव पत्नी चेति शालीकिः । ॥

I. 126. 14. बर्हिषः पर्युपोषण इति ॥ वेद्यै दक्षिणेऽंसे पर्युपोषे- दिति बौधायन ॥ उत्तरवेद्या इति शालीकिः । ॥

---

१ Thus G (sec. m.); इडां समवद्यति the other MSS.

२ नीच्याग्नीधे Bu GDC; नीच्याग्नीध्रे H Ben U.

I. 126. 16. सक्तुहोमस्य करण इति ॥ त्रीन्सक्तुहोमान्कुर्यादिति बौधायन॥ एकमेवेति शालीकिः॥ प्रदाव्य एव सक्तुहोमेन चरेदित्यौपमन्यवः।॥

I. 127. 6. III. 54. 10. आख्यातं देवतानामुपस्थानम् ॥

I. 127. 8. यूपस्योपस्थान इति ॥ सूत्रं बौधायनस्याहवनीयमेवैतेन ५ यजुषोपतिष्ठेतेति शालीकिः।॥

I. 127. 10. समन्वानयन[१] इति ॥ सूत्रं बौधायनस्य॥ नाद्रियेतेति शालीकिः।॥

I. 127. 13. पूर्णाहुत्यै करण इति ॥ कुर्यादिति बौधायनो॥ न कुर्यादिति शालीकिः।॥ १०

I. 127. 14. दक्षिणायै दान इति ॥ धेनुं वानड्वाहं वा दद्यादिति बौधायनो॥ ऽन्यदैकधनमिति शालीकिरन्यदैकधनमिति शालीकिः।॥ ३१ ॥ दशमः ॥

॥ इति विंशः[२] प्रश्नः ॥

---

[१] Thus B. n HGUC and the vivaraṇa; समन्वायन Bu; समन्वानयम Be; समन्वाम D.

[२] On the praśna-number cp. Preface to Vol. II, p. ii.

I. 128. 1. अथातश्चातुर्मास्यानि व्याख्यास्यामः ॥

स ह स्माह बौधायनो यावज्जीवप्रयुक्तान्येव चातुर्मास्यानि स्युरन्तर्मिथुनानि । प्रथमे त्वेव संवत्सरे व्रतं चरेदित्यथो ह स्माह शालीकिः सांवत्सरिकाण्येव खलु[1] चातुर्मास्यानि ब्रह्म-
५ चर्यवन्ति भवन्तीति ॥ यथाप्रयोगमित्यौपमन्यवः । ॥

I. 128. 5. पयसां मन्त्रामन्त्र इति ॥ उभये सायंप्रातर्दोहा मन्त्रवन्तः स्युरिति बौधायनस्तूष्णीका इति शालीकिरथो ह स्माहौप-मन्यवो यत्प्राक्सोमेज्यायै चातुर्मासिकानि पयाꣳसि तूष्णी-कानि स्युरथोर्ध्वꣳ[2] सोमेज्यायै मन्त्राग्लभेरन्नित्यथो[3] ह
१० स्माहाश्मीगविः पञ्चैवैतानि पयाꣳसि मन्त्रवन्ति भवन्ति[4] दर्शपूर्णमासयोर्मैत्रावरुण्यामिक्षायां दाक्षायणयज्ञे कौण्डपा-यिन्ये सौत्रामण्यामिति । ॥

128. 8. वैश्वानरपार्जन्ययोः[5] करण इति ॥ कुर्यादिति बौधा-यनो ॥ न कुर्यादिति शालीकिः । ॥

I. 128. 9. १५ फाल्गुन्यां वा चैत्र्यां वा पौर्णमास्यां विश्वेभ्यो देवेभ्यो वत्सा अपाकृता भवन्तीति ॥ सूचं बौधायनस्योदगयन आपूर्यमाणपक्षस्य पुण्याह इति शालीकिः । ॥

---

१ Om. II Bc.

२ Thus H Ben Be G (pr. m.) U DC Keś.; स्युरत ऊर्ध्वं Bu; अथ effaced in G.

३ Thus Bu; मंत्रां G; मंत्रा the other MSS.

४ भवंतीति Bu Be G (sec. m.).

५ Thus U (sec. m.); °पार्जन्याया the other MSS.

I. 128. 7. प्रसूमयं[1] प्रस्तरमिति[1]॥ सूत्रं बौधायनस्य॥ सर्वमेवैतद्बर्हिः प्रसूमयꣳ स्यादिति शालीकिः।॥

I. 128. 12. पञ्चहोतुर्होम इति॥ सूत्रं बौधायनस्योपवसथ एव पञ्चहोतारं जुहुयादिति शालीकिः।॥

I. 131. 5. प्रयाजानामनुमन्त्रण इति॥ चतुरश्चतुर्भिरनुमन्त्र्य[2] पञ्चमेनेतराननुसमियादिति[3] बौधायनश्चतुरश्चतुर्भिरनुमन्त्र्य सर्वेषां पारे पञ्चमेनानुमन्त्रयेतेति[4] शालीकिः।॥ ५

एककपालानां मन्त्रामन्त्र इति॥ मन्त्रवन्तः स्युरिति बौधायनस्तूष्णीका इति शालीकिः।॥

एककपालानामवदान इति॥ स ह स्माह बौधायनश्चातुर्मास्यिकानामेव नावद्येदथेतरेषामवद्येदित्यथो ह स्माह शालीकिस्तन्त्रहराणामेवावद्येदथेतरेषां[5] नावद्येदित्यथो ह स्माहौपमन्यवो य एव वैश्वदेवपदषि तस्य नावद्येदथेतरेषामवद्येदिति।॥ १०

---

१ ०मयः प्रस्तर इति MSS. exc. Bu U (pr. m.) and the vivaraṇa; the accusative as XXIII. 18: माषैः पूर्वं कमण्डलुमिति।

२ Thus Be; चतुर्भिश्चतुरो G (sec. m.); चतुरश्चतुर्भिश्चतुरो G (pr. m.) चतुर्भिश्चतुर्भिश्चतुर्भिरन् D; चतुर्भिश्चतुर्भिरम्० Ben C.

३ ०मसमीयादिति Bu G (sec. m.); समीयादिति (without अनु) Ben HDC; पंचमीयदिति Be.

४ ०मंत्रयेदिति MSS.

५ ०हराणामेवा० Be U (sec. m.); ०हराणमेवा० Ben; ०हरणानामेव G (sec. m.); ०हरेणमेवा० Bu; ०करणमेवा० HU (pr. m.); ०हरणमंत्रा० C (pr. m.), ०हराणमेवा० C (sec. m.).

एककपालानामभिहोम इति ॥ यः स्रुचि सꣳस्रावः स्यात्तेनाभिजुहुयादिति बौधायनश्चतुर्भिश्चतुर्भिर्ऋतुनामभि-रेकैकमिति शालीकिः ॥ १ ॥

एककपालानामाग्रयस्यानुसꣳहरण इति ॥ अनुसꣳहरे-
५ दिति बौधायनो नानुसꣳहरेदिति शालीकिः ॥

I. 132. 4. वाजिनस्य चर्याया इति ॥ उपाꣳशु चरेदिति बौधा-यन उच्चैरिति शालीकिः ॥

I. 132. 6. वाजिनस्य भक्षण इति ॥ सूत्रꣳ शालीकेर्नो ह स्माह बौधायनो ऽवघ्रभक्षणेनैवेतरे[1] भक्षयेयुर्यजमान एव प्रत्यक्षं
१० भक्षयेदिति ॥

I. 132. 17. निवर्तन इति ॥ निवर्तनेनोपवाप्योभयं[2] केशश्मश्रु वाप-यीतेति बौधायनो निवर्तनेनोपवाप्य[2] श्मश्रूण्येव वापयीत न केशानिति शालीकिर्निवर्तनेनोपवाप्य[2] नैव श्मश्रूणि वाप-यीत न केशानित्यौपमन्यवः ॥

I. 133. 6. १५ वरुणप्रघासेषु दक्षिणस्य विहारस्य पात्राणां करण इति ॥ सूत्रं बौधायनस्य सौवर्णानि वा राजतानि वा स्युरिति शालीकिः शमीमयानीत्यौपमन्यवः ॥

---

१ °भक्षणेनै° Bu G and U (sec. m.); °भक्षेणै° DHC Ben Be G and U (pr. m.).

२ Uncertain reading; °नोपवाप्य each time H Ben Be UDG (pr. m.) C, °नोवाप्य G (sec. m.), thus also (besides °नोपाव) Bu; the vivaraṇa seems to have read also °नो वाप्यः; it runs: निवर्त(ने)नो वाप्यः केशा श्मश्रुणा विभज्य उशब्दः स (read च ?) शब्दस्यार्थे ।

स्तम्बयजुषोर्हरण इति ॥ व्यतिषारꣳ स्तम्बयजुषी हरेयातामिति[1] बौधायनः ॥ सहेति शालीकिः । ॥

आज्यस्यावेक्षण इति ॥ दार्शपौर्णमासिकायै दक्षिणत उपविश्य दक्षिणमवेक्ष्योत्तरमवेक्षेतेति बौधायनो ॥ वेदिसंधावुपविश्य दक्षिणमवेक्ष्योत्तरमवेक्षेतेति शालीकिर्मध्यत[2] इत्यौपमन्यवः । ॥ ५

I. 133. 8. ऐषीकꣳ शूर्पमिति ॥ सूत्रं बौधायनस्य ॥ दर्भमयं वा कुशमयं वेति शालीकिः ॥ प्रत्यक्षमित्यौपमन्यवः । ॥

I. 137. 12. शूर्पस्यानुप्रहरण इति ॥ अनुप्रहरेदिति बौधायनो ॥ नानुप्रहरेदिति शालीकिरद्भिरभ्युक्ष्य भुञ्जीतेत्यौपमन्यवः । ॥ १०

I. 138. 8. आमिक्षयोरवदान इति ॥ सूत्रꣳ शालीकेर्यो ह स्माह बौधायन आमिक्षयोरवदाय मेषीमवदध्यात्[3] शमीपर्णकरीरसक्तूनामवद्येद् घासोक्ता ह्येते भवन्तीत्युत्तमेनावदानेन सर्वं विश्वलोपꣳ[4] समवदध्यादित्यौपमन्यवः[4] । ॥ २ ॥

I. 138. 4 (?) मारुत्यै चर्याया इति ॥ सूत्रं बौधायनस्योत्तर एवाग्नौ मारुत्या चरेदिति शालीकिः । ॥ १५

---

१ Thus (and cp. XXV. 1. s. f.) Bu Ben HGU; चरियामिति DC; चरेतामिति Be.

२ मध्य Bu G (sec. m.).

३ Thus H Ben DC; मेषमुपद० Bu; मेषामुपद० Be G and U (sec. m.).

४ Thus Bu Be U (sec. m.); ०लोपमवदध्या० H Ben. G; ०लोपमवद्ध्या० D; ०लोपमवध्या० C.

I. 139. 4. मारुत्ये केचणस्यानुप्रहरण इति ॥ अनुप्रहरेदिति बौधायनो नानुप्रहरेदिति शालीकिः ॥

I. 140. 10. अवभृथ इति ॥ सूत्रमाचार्ययोर्नो ह स्माहौपमन्यवस्तुषेस्य निष्काकेन चावभृथमवेयादिति ॥

५ आख्यातमुदकान्तस्य प्रत्यसनम्[1] ॥

आख्यातमाप्लवनम्[1] ॥

I. 140. 14. III. 67. 16. आख्यातं समिधां करणम् ॥

I. 141. 15. आनीकवतस्य निर्वपण इति ॥ पाणिसंमर्शनेनादित्यस्योदयमाकाङ्क्षेतेत्याचार्ययोर्मुष्टिमेव गृह्णीयादित्यौपमन्यवः ॥

१० साकं रश्मिभिः प्रचरेदित्यौपमन्यवीपुत्रः ॥ एष एवापि सांतपनस्य प्रदेश एष कौण्डिनस्य ॥

I. 141. 18. गृहमेधीयस्य मन्त्रामन्त्र इति ॥ मन्त्रवान्स्यादिति[2] बौधायनस्तूष्णीक इति शालीकिः ॥

गृहमेधीयस्य निर्वपण इति ॥ पवित्रवता पात्रेण मन्त्रवन्त-

१५ मिति[3] बौधायनोऽपवित्रेण तूष्णीकमिति शालीकिः ॥

---

१ Of these two d\aidhas the first seems to refer to Vol. I. 261. 17; the second, according to the vivarana, to III. 67. 16: आप्लावनं स्नानम् । उभयं (sc. द्वैधं) समिधां करणेन व्याख्यातं सर्वं वा यजमानो वेति मान्यदित्याख्यानमस्य ... सर्वमेवाख्यातं तथावशेषवचनमनर्थकं स्यात् ।

२ मन्त्रवत्स्यादिति DC; मन्त्रवस्यादिति H.

३ मंत्रवदिति G (sec. m.).

I. 141. 20. गृहमेधीयस्य श्रपण इति ॥ पयसि श्रपयेदिति बौधायनो " ऽप्स्विति शालीकिः ' ॥

शाकलानां करण इति ॥ कुर्यादिति बौधायनो " न कुर्यादिति शालीकिः ' ॥

I. 141. 22. गृहमेधीयस्यासादन इति ॥ दात[1] एव बर्हिष्यासादयेदिति बौधायनो " ये ऽन्ये ऽनुपयुक्ताः कुशाः स्युस्तेष्विति शालीकिः ' ॥ ५

I. 142. 1. गृहमेधीयस्य चर्याया इति ॥ उपांशु चरेदिति बौधायन " उच्चैरिति शालीकिः ' ॥

शाकलानामनुप्रहरण इति ॥ अनुप्रहरेदिति बौधायनो " नानुप्रहरेदिति शालीकिः ' ॥ १०

I. 142. 5. प्रतिवेशस्य श्रपण इति ॥ अन्वाहार्यपचने श्रपयेदिति बौधायनो " ग्रामाग्नाविति शालीकिः ' ॥

I. 142. 10. पूर्णदर्व्यस्य[2] होम इति ॥ सूत्रमाचार्ययो " र्थि। स्नौतक्का ब्रह्मणो हिंकारे[3] जुहुयादिति गौतमः ॥ ३ ॥ प्रथमः ॥ १५

I. 143. 19. महापितृयज्ञस्य बर्हिषीति ॥ समूलमेतद्बर्हिर्भवतीति बौधायनस्तत्र नास्ति प्रत्यभिमर्शन इति " सातिशेषं[4] भव-

---

१ दात Ben H (as partic from द्यति); अप Be; C D om. दात एव; विशय G and U (sec. m.), thus (var. विषय) the vivaraṇa.

२ ॰दर्व्यस्य Bu, the vivaraṇa; ॰दर्वस्य H Ben Be G U D C.

३ ॰कारेण H G D C U (pr. m.); ॰कारेणाभिकृ॰ U (sec. m.).

४ Thus H Ben G U D C; Be defect.; सशेषं Bu.

तीति शालीकिस्तत्र सिद्धः प्रत्यभिमर्शन इति ॥ निर्मूल-
लूनमेवैतल्लुनुयादित्यौपमन्यवः[१] । ॥

144.6. अथैतदभिवान्यायै दुग्धमर्धपात्रमिति ॥ सूत्रं बौधायन-
स्याथ यदि कनीयः स्यादद्भिरभ्युन्नीयेति[२] शालीकिः । ॥

I. 144. 9. ५ तेषां व्रीहिष्वेव हविष्कृतमुद्वादयत्युपोप्यच्छन्ते यवा-
निति ॥ सूत्रं शालीकेर्यो ह स्माह बौधायन आवपन-
प्रभृति यत्रेषु मन्त्रकर्माभ्यावर्तेत तन्त्रं तु हविष्कृत्[३]
स्यादिति । ॥

I. 145. 1. आप्यनिनयन इति ॥ जघनेन गार्हपत्यमाप्येभ्यो निनये-
१० दिति बौधायनो ॥ ऽग्रेणातिहायेति शालीकिरग्रेण वा जघ-
नेन वेत्यौपमन्यवः । ॥

I. 145. 2. वेद्ये करण इति ॥ उपनिष्क्रम्याग्न्यगाराद्दक्षिणे[४] पूर्वं
ऽवान्तरदेशे कुर्यादिति बौधायनो ॥ ऽन्तरेवैतां दिशमिति
शालीकिरन्वाहार्यपचनमेवाभित इत्यौपमन्यवः । ॥

I. 145. 3. १५ अन्वाहार्यपचनस्योपसमिन्धन इति ॥ स्वे स्थान उपसमि-
न्धीरन्निति बौधायन ॥ इध्ममेवातिप्रणयेयुरिति शालीकिः । ॥

---

१ लुनुया॰ Be G and U (sec. m.); लुनीया॰ Ben H Bu C D G and U (pr. m.).

२ Thus G U D H C; without अभि Be; ॰भ्युन्नीयेवेति Ben Bu.

३ ॰ष्कृत स्यादिति G U C D H Ben; ष्कृत स्यादिति Be; ॰ष्कृतं स्यादिति Bu; cp. XXI. 16, XXII. 11.

४ दक्षिणे Bu G; दक्षिण Ben Be U D C.

I. 145. 12. आज्यग्रहाणां ग्रहण इति ॥ पञ्चगृहीतानि वा चतुर्गृहीतानि वा स्युरिति बौधायनः ॥ चतुर्गृहीतान्येवेति शालीकिः ॥

प्रस्तरस्य मन्त्रामन्त्र इति ॥ ग्रहणं चैवास्य न्यसनं च तूष्णीकं स्यादथेतरन्मन्त्रवत्स्यादिति बौधायनः ॥ संभरणं[1] चैवास्य न्यसनं च तूष्णीकं स्यादथेतरन्मन्त्रवत्स्यादिति शालीकिर्यावन्न्यसनमेव[2] तूष्णीकं स्यादथेतरन्मन्त्रवत्स्यादित्यौपमन्यवः ॥ ५

I. 145. 15. त्रिरपसलैः परिमृजन्त्यर्थेनेति ॥ सूत्रं बौधायनस्य ॥ यथोत्पन्नेनैव संस्तृणीयादिति शालीकिः ॥

वेद्यै स्तरण इति ॥ सूत्रं बौधायनस्योर्णाम्रदसं त्वा स्तृणामीत्येव ब्रूयादिति शालीकिः ॥ ४ ॥ १०

I. 145. 17. परिधीनां परिधान इति ॥ सूत्रं शालीकेर्भो च स्यात् बौधायनः सर्वान्परिधीन्परिदध्यात्पिष्टकर्माणि क्रियमाणे दक्षिणतश्चोत्तरमुपनिदध्यादिति[3] ॥

I. 146. 2. हविषामुद्वासन इति ॥ सूत्रं बौधायनस्य ॥ यथाकृतमेव[4] हवींष्युद्वासयेदिति शालीकिः ॥ १५

हविषां संचरो[5] ऽध्वर्योश्चेति ॥ दक्षिणेनेति बौधायन ॥ उत्तरेणेति शालीकिः ॥

---

१ संभरणं Bu.

२ Thus G (sec. m.); यावन्न्यसन॰ the other MSS.

३ Thus all exc. Bu (दक्षिणश्चोत्तरमु॰).

४ Thus G and U (sec. m.), D: यथाकृत॰ the other MSS.

५ संचरो all the MSS. exc. Bu (संचरे); the vivaraṇa has also the nominative.

I. 147. 3.  विपरिक्रामन्त्येत ऋत्विजो विपरिहरन्ति हवींषीति ॥ सूत्रं बौधायनस्य ॥ नात्र हवींषि विपरिहरेयातामिति[१] शालीकिर्नात्र हवींषि विपरिहरेयातामध्वर्युश्चैवाग्नीध्रश्च[१] विपरिक्रामेतामित्यौपमन्यवः[२] । ॥

I. 147. 13. ५  आश्रावण इति ॥ ओ स्वधेति बौधायन ॥ आ स्वधेति शालीकिः । स्वधेत्यौपमन्यवः । ॥

I. 146. 13.  प्रवर इति ॥ सूत्रमात्रयैर्विदाꣳश्चकिलमित्यौपमन्यवः । ॥

I. 149. 7. III 87. 8.  आख्यातं पिण्डानां दानम् ॥

I 150. 8; III. 87 11.  आख्यातमाञ्जनाभ्यञ्जनयोः ॥

I. 150. 12; III. 87. 13.  आख्यातं पिण्डानामनुप्रहरणम् ॥

I. 151. 6.  त्रैयम्बकाणां मन्त्र मन्त्र इति ॥ मन्त्रवन्तः स्युरिति बौधायन ॥ तूष्णीका इति शालीकिर्॥ येनानेककपाल एव अपयेदित्यौपमन्यवः ॥

I. 151. 8. १५  एकोल्मुकस्य हरण इति ॥ अन्वाहार्यपचनाद्धरेदिति बौधायनो ॥ ग्रामाग्नेरिति शालीकिः । ॥

I. 151. 9.  एतस्मादाय गार्हपत्यमुपतिष्ठन्त इति ॥ स ह स्माह बौधायन उभय[३] एष[३] मन्त्रो भवत्याध्वर्यवश्च याजमानश्चेति ॥ याजमान एवेति शालीकिः । ॥

---

१ Thus all; read probably विपरिहरेतामिति ।

२ Thus Be; ०क्रामेयाता मि० the other MSS.

३ Thus G D C H Be ‹ U (pr. m.); उभयस्य एव U (sec. m.); उभयस्य च एव Be; उभयेव Bu.

I. 152. 5. दैयम्बकाणामुत्खेदन[१] इति ॥ सूत्रं शालीकेर्"ची ह स्माह बौधायनस्त्रिरेवाव्यतिषजन्परीत्य[२] चिरुत्खिदेद्भगाय त्वा भगाय[३] त्वेति[।] ॥ ५ ॥

I. 152. 10. अथैनान्यजमानस्याञ्जलावावपतीति ॥ सूत्रं शालीकेर्"ची ह स्माह बौधायनो यजमानस्यैवैकस्य मन्त्रेणावपेत्तूष्णीं पत्न्यै च[४] भगकामायै चेति[।] ॥

I. 153. 1. अथैनान्मूत ओप्य नीललोहिताभ्यां सूत्राभ्यां विषज्य शुष्के वा स्थाणौ विशाखायां[५] वा बध्नातीति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः[।] ॥

I. 153. 5. उदपात्रस्योपनिनयन इति ॥ प्रदक्षिणमुपनिनयेदिति १० बौधायनो" यथोपपादमिति शालीकिः[।] ॥

I. 153. 20. शुनासीरीयपदपत्र[६] इज्याया[६] इति ॥ सूत्रं शालीकेर्"ची ह स्माह बौधायनो य एवात ऊर्ध्वमापूर्यमाणपक्ष आगच्छे-

१ ०मुत्खिदन G (sec. m.) Be and the vivaraṇa; ०मुत्खिदमन Bu.

२ Thus G and U (sec. m.) and the vivaraṇa (अव्यतिषजन्परीत्य-दन्); ०स्त्रिरेवव्यतिष० the other MSS.

३ Thus Be G and U (sec. m.); भगेन Ben H D C G and U (pr. m.).

४ चे (sic) Be, all the other MSS. om. the word.

५ Thus Ben H U D C; विशाखायां Be Bu G (sec. m.).

६ ०पदप इज्याया Ben C; पदपा इज्याया U D; शुनरा इज्याज्याया H; पदपेज्याया Be G (sec. m.) and the vivaraṇa.

त्तस्मिञ्छुनासीरीयपरुषा यजेत । त्रयोदशस्वेवैतन्मासस्वापौ-
ष्यार्थे[1] दृष्टं भवतीति । ॥

वैद्ये करण इति ॥ दार्शपौर्णमासिकी स्यादिति बौधा-
यनः । पाशुबन्धिकीति शालीकिः । ॥

५ दक्षिणानां दान इति ॥ सूत्रं शालीकेर्॥चो ह स्माह
बौधायनो हिरण्यं वैश्वानरे दद्याद्धेनुं पार्जन्ये द्वादश वैश्वदेवे
द्वादश वरुणप्रघासहविःषु तिस्र आनीकवते तिस्रः सांतपने
चतस्रो गृहमेधीय ऋषभं पूर्णदर्व्यै[2] तिस्रः क्रैडिने द्वादश
महाहविःषु तिस्र आदित्ये द्वादश शुनासीरीयहविःष्वि-
१० त्य॥चो ह स्माहौपमन्यवस्तुतःषष्टिश्चातुर्मास्यदक्षिणाः समाम्नाता
भवन्ति । तास्वेनाधिगच्छेद्यासाꣳस्येतावन्ति मन्थान्वौदनान्वैता-
वतो[3] दद्यात्तेनो हैवैतं काममवाप्नोतीति[4] । ॥

चातुर्मास्यानामन्त इति ॥ सोमान्तानि स्युरिति बौधा-
यनः ॥ पश्वन्तानीति शालीकिः ॥ सवनेष्ट्या यजेतेत्यौप-
१५ मन्यवः । ॥ ६ ॥ द्वितीयः ॥

---

१ त्रयोदशस्वेवैतन्मा॰ Be H G U (pr. m.); त्रयोदशस्य ह्येवैतन्मा॰ U (sec. m.); त्रयोदशास्व --यैतान्मा॰ Bu; त्रयोदशस्य वैतन्मा॰ Ben C U.—॰पौष्यार्थे Ben G U D C; ॰तौष्यार्थे Be; ॰भौष्यार्थे Bu; ॰पौषार्थे H.

२ Thus G; ॰दर्वे the other MSS.

३ Thus G U D C and Keś.; मंथान्वोदनान्वेतावतो Ben; मत्यान्वोदनान्वैतावतो Bu; मंथान्योदनान्येतावतो H; मंथान्वेतावतो Be (cp. Vol. I. 44. 15).

४ इति is not found in my copies.

I. 157. 1. सप्तहोतुर्होम इति ॥ सूत्रं बौधायनस्य ॥ षड्ढोतारꣳ हुत्वा सप्तहोतारं जुहुयादिति शालीकिः ॥

२ यूपाहुत्यै हवन इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

५ वाससामुपकल्पन इति ॥ अष्टाविति बौधायनः ॥ सप्तेति शालीकिः ॥

कृष्णाजिनानामुपकल्पन इति ॥ पञ्चेति[1] बौधायनः ॥ षडिति[1] शालीकिः ॥

कृष्णविषाणाया उपकल्पन इति ॥ त्रिवलिरिति बौधा-
१० यनः ॥ पञ्चवलिरिति शालीकिः ॥ सकलैवैषा स्यादित्यौप-
मन्यवः ॥

I. 157. 5. व्रतप्रदान इति ॥ कꣳस इति बौधायनश्चमस इति शालीकिः ॥

प्रवर्ग्यस्य करण इति ॥ स ह स्माह बौधायनो न प्रथम-
१५ सोमे प्रवृञ्ज्यादुपनामुको हैनमुत्तरो यज्ञो भवतीति ॥ न प्रवर्ग्यं गच्छेच्चनेति शालीकिः ॥ ७ ॥

I. 157. 6. तीर्थगमन इति ॥ स ह स्माह बौधायनः प्रदक्षिण-
मावृत्यैतत्तीर्थं गच्छेद्यथामुतोऽपसलैरावर्ततेत्यथो ह स्माह शालीकिरपसलैरावृत्यैतत्तीर्थं गच्छेद्यथामुतः प्रदक्षिणमा-
२० वर्ततेति ॥

[1] In G पञ्च obtains (sec. m.) the place of षड् ।

I. 157. 7. अथास्य प्राङ्मुखस्य दक्षिणं गोदानमद्भिरुनत्तीति ॥ सूत्रं बौधायनस्योभयमेवाप्यस्य मन्त्रेण कुर्यादिति शालीकिः । ॥

I. 158. 1. अभ्यञ्जन इति ॥ सूत्रꣳ शालीकेर॥थो ह स्माह बौधायनो महीनां पयो ऽसीत्यादाय वर्चोधा असि वर्चो मयि धेहीत्यभ्यञ्जीतेति । ॥ ५

I. 158. 4. आञ्जन इति ॥ सूत्रꣳ शालीकेर॥थो ह स्माह बौधायनो वृत्रस्य कनीनिकासीत्यादाय चक्षुष्पा असि चक्षुर्मे पाही-त्याञ्जीतेति[1] । ॥

I. 158. 5. त्रिरनिधावं द्विरुत्तरमप्यु पञ्च कृत्व आङ्क्त इति ब्राह्मणं पञ्च कृत्व एव दक्षिणं पञ्च कृत्व उत्तरमिति ॥ पूर्वः कल्पो १० बौधायनस्योत्तरः शालीकेः ॥

I. 158. 7. पवन इति ॥ स ह स्माह बौधायनस्त्रीन्प्रवर्गान्कृत्वा तेषामेकेन प्राणदेशे पवयेदथेतरेण नाभिदेशे ऽथेतरेण गुल्फदेशे । ऽथैनानद्भिरभ्युक्ष्योदस्युत्क्षिपेदित्य॥थो[2] ह स्माह शालीकिर्दर्भाभ्यां पवयति त्रिभिः पवयतीत्येतैरेनमेकविंश- १५ त्यावग्राहशः[3] पवयित्वाथैनानद्भिरभ्युक्ष्योदस्युत्क्षिपेदित्य॥थो ह

---

१ Thus Keś. only; पाहीत्यंक्त इति G U, ॰त्यांक्त इति D C; the other MSS. corrupt. An optative is required.

२ Instead of उत्क्षिपेत्, the reading of Be (and once उत्क्षिपे॰ Bu), here and infra, the MSS. have उत्क्षपेत् ।

३ Uncertain; G (sec. m.) as given in the text; पवयतीत्येवमेकं विंशत्या॰ Bu; पवयतीत्युत्तरैरेवमेकविंशत्या॰ U; पवयतीत्युत्तरैरेकमेवविंशत्या॰ H; पवयतीत्युत्तरैकविंशत्या॰ C D; Be wholly corrupt.

स्माहौपमन्यवः समस्तैरेवैनं [१]प्राणदेशे पवयेच्चित्पतिस्त्वा पुनातु वाक्पतिस्त्वा पुनातु देवस्त्वा सविता पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिरिति । देवतायां देवतायामतिवाच्या-द्भिरभ्युच्योदश्युत्विदेदिति[२] । ॥

I. 158. 11. ५　अथैनꣳ सव्ये पाणावभिपातयेति ॥ दक्षिण[३] इति प्रोक्तं ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः । ॥

I. 158. 14.　अथैनमग्रेणाहवनीयं पर्याणयेति ॥ जघनेनेति प्रोक्तं ॥ पूर्वः कल्पः शालीकेरुत्तरो बौधायनस्य ॥

I. 159. 5.　पत्न्या उदानयन इति ॥ सूत्रꣳ शालीकेरत्रो ह स्माह १० बौधायनः शुचिमेवैनां पवयित्वा सर्वयर्चोदानीय जघनेन गार्हपत्यमुपवेशयेदिति । ॥

I. 158. 17.　पत्न्या दीक्षण इति ॥ सूत्रमाचार्ययोरत्रो ह स्माहौप-मन्यवः प्रायणीये हविष्कृदन्ते पत्नीं दीक्षयेदिति । ॥

159. 10.　न यजमानं व्रतमुपनयतीति ॥ सूत्रꣳ शालीकेरत्रो ह १५ स्माह बौधायनः सौमिके तन्त्रे पौरोडाशिकं याजमानमभ्या-वर्तेतान्यत्र यज्ञस्य पुनरालम्भादिति । ॥

I. 159. 11.　न पत्नीꣳ संनह्यतीति ॥ सूत्रꣳ शालीकेरत्रो ह स्माह बौधायनो दीक्षणीयायामेनाꣳ संनह्य सꣳस्थितायां विमु-

---

१ Thus Be; एव not found in G (pr. m.) Bu H U D C; एवं not in G (sec. m.).

२ देवतायां once in Bu D H C.

३ ०क्षिणत Bu and one copy of the vivaraṇa.

ध्याध्वरिकेण सह याजमानेन[1] तस्मैतस्मै वांत[2] ऊर्ध्वं पौरो-
डाशिकेन कर्मणाभिमंनयेदिति । ॥

I. 159. 15. ध्रुवाया आप्यायन इति ॥ स ह स्माह बौधायन उभा-
वेव ध्रुवामाप्याययेतामध्वर्युश्च यजमानश्चेत्य॥ध्वर्युरेव ध्रुवामा-
प्याय्य दौचाकृतीर्जुहुयादिति शालीकिः । ॥ ५

I. 159. 16. दौचाकृतीनाꣳ होम इति ॥ सूत्रं बौधायनस्य ॥ चतुर्थ्यां[3]
पञ्चमीमनुद्रुत्य जुहुयादिति शालीकिर॥थो ह स्माहौपमन्यव
आकूत्यै प्रयुज इति तिस्रो ऽनन्तरा हुत्वा सरस्वत्यै पूष्णे ऽग्नय
इत्युपातीत्यापो देवीर्बृहतीर्विश्वशम्भुव इत्येतां जुहुयादग्नी-
द्रुहणमिति । ॥ ८ ॥ तृतीयः ॥ १०

I. 160. 10. कृष्णाजिनयोरिति ॥ द्वाभ्याꣳ सम्भृताभ्यां[4] दीक्षये-
दिति बौधायनो । ऽथ[5] यद्यन्यतरत्स्याद्दक्षिणमोम॑ं प्रतिषीव्ये-
दित्य॥कमेव[6] कृष्णाजिनꣳ स्यादिति शालीकिः । ॥

I. 160. 11. शुक्लकृष्णयोः संमर्शन इति ॥ शुक्ले ऽङ्गुष्ठो भवति
कृष्णे ऽङ्गुलिरित्येवꣳ शुक्लकृष्णे संस्पृशेदिति बौधायनः ॥ १५

---

१ याजमा॰ G and U (sec. m.) and the vivaraṇa; यजमा॰ the other MSS.

२ वात G (sec. m.) U Be, the vivaraṇa.

३ चतुर्थ्यां G (sec. m.) D.

४ Thus G (sec. m.) only; सम्भृताभ्यां the other MSS.

५ Effaced in G.

६ इति before एकमेव found in G only (sec. m.).

पृथेनैवैतं[१] संधिं संमृशेदिति शालीकिरॅनमेकाङ्गुल्यैव संमृशेदित्यौपमन्यवः ॥

कृष्णाजिनस्याभिसर्पण इति ॥ सूत्रं शालीकेर्वो ह स्माह बौधायनः पूर्वं वोत्तरं वार्धं विगृह्णीयात्तृतीयेन मध्यदेशं गच्छेदिति ॥

I. 160. 17, I. 23. 5. आख्यातं ग्रन्थिकरणम् ॥

160. 22. अथास्य प्रदक्षिणमुष्णीषेण शिरो वेष्टयतीति ॥ सूत्रं बौधायनस्य वाससैव संप्रच्छन्नः स्यादिति शालीकिः ॥

161. 4. कृष्णविषाणाया: प्रदान इति ॥ सूत्रं शालीकेर्वो ह स्माह बौधायनः समस्तेनैवास्मै मन्त्रेण कृष्णविषाणां प्रयच्छेत्तूष्णीं वेद्यन्तमुद्धन्यात्तूष्णीं केशान्तमुपस्पृशेदिति ॥

161. 9. दण्डस्य प्रदान इति ॥ सूत्रमाचार्ययोर्वो ह स्माहौपमन्यवः समस्तेनैवास्मै मन्त्रेण दण्डं प्रयच्छेत्सूपस्था देवः वनस्पतिरूर्ध्वो[२] मा पाह्योदृच इति[३] ॥

I. 161. 11. १५ अथैनं यज्ञस्यान्वारम्भं वाचयतीति ॥ सूत्रं शालीकेर्वो ह स्माह बौधायनो मष्टिकरणाः खल्वेते मन्त्रा दृष्टा भवन्ति

---

१ Thus corrected in accordance with the vivaraṇa, which runs प्रथमेन (*sic*) इस्ततलेन ; प्रथमेमेवैतं G. (sec. m.); पृशेमैवैतं Bu; पृथगेवैम U H D C.

२ Thus Be; before ऊर्ध्वो H ins. इति ; D U G C abbreviate the mantra, giving only the first and the last words.

३ Thus Be; C D U G H Bu add यजमानः प्रतिगृह्णाति, apparently a reminiscence of the text proper (Vol. I., 161, 12).

स्वाहा यज्ञं मनसा स्वाहा द्यावापृथिवीभ्याꣳ स्वाहोरोरन्तरिक्षात्स्वाहा यज्ञं वातादारभ इति ॥

I. 161. 13. मुष्टिकरण इति ॥ वाचोयमसंयुक्तं[1] मुष्टिकरणꣳ स्यादिति बौधायन आवान्तरदीक्षायै विसर्गादिति शालीकिः ॥

I. 161. 14. आवेदन इति ॥ यथावर्णमावेदयेदिति बौधायनोऽदीक्षिष्टायं ब्राह्मण इत्येव ब्रूयादिति शालीकिः ॥ ५

I. 162. 14. व्रतदोहन इति ॥ सूत्रं बौधायनस्यौपराह्णिकमेव[2] यजमानव्रतꣳ स्यादिति शालीकिः ॥ ९ ॥

I. 163. 8. यजुषोरनुषङ्ग इति ॥ आ कृष्णाजिनप्राशनादनुषञ्जेतामिति[3] बौधायन आवान्तरदीक्षायै विसर्गादिति शालीकिरा दक्षिणानयनादित्यौपमन्यवः[4] ॥ १०

I. 163. 11. संवेशनयजुषीति[5] ॥ सूत्रꣳ शालीकेरथो ह स्माह बौधायनोऽग्ने त्वꣳ सु जागृहीत्येव संविशेद्व्रतयिष्यन्नप आचामेद्दैवीं धियं मनामह इति ॥

I. 164. 12. अथ सनीहाराम्प्रहिणोतीति[6] ॥ अन्यचोपशूद्रयोरिति १५

---

१ Thus G (sec. m.) and the vivaraṇa; वाचोयमसं॰ Be H U G (pr. m.); वाचंयमसं॰ D C; वाचोयम्यसं॰ Bu.

२ ॰पराह्णा U D H Be C; cp. XXI. 19 init.

३ ॰षञ्जेतामिति H Bu G U D C; ॰षञ्जेदिति Be.

४ Thus Be, the vivaraṇa and Keś.; दक्षिणाह्वानादि॰ H Bu G (sec. m.) U D C; दक्षिणावदनादि॰ G (pr. m.).

५ यजुषोरिति H, यजुषी इति U D C.

६ सनी॰ Be; सनि॰ Bu G; संनि॰ D U C; सन्न॰ H.

बौधायनो ॥ ऽन्यचोपैरिति[१] शालीकिः । सर्वान्यङ्गमिद्धय इत्यौपमन्यवः । ॥

I. 1. संवेशनयजुःप्रबुद्धयजुःप्रयाणयजुःपर्याणयजुरिति[२] ॥ अनुषङ्गीण्येतानि[३] भवन्तीति बौधायनः ॥ सकृत्सकृतान्येवैतान्यह्ने[४] ५ वा रात्रियै वा स्युरिति शालीकिः । ॥

I. 164. 16. दक्षिणानां प्रतिग्रह[५] इति ॥ स ह स्माह बौधायनो यस्य कस्य च जातस्य मन्त्रेण प्रतिगृह्णीयात्पुनरप्यागतं[६] मन्त्रेणैव प्रतिगृह्णीयादित्यथो ह स्माह शालीकिर्यस्य कस्य च जातस्य मन्त्रेण प्रतिगृह्णीयात्प्रतिगृहीतमेव तस्य स्यादागन्त्वेवास्यात[७] १० ऊर्ध्वं मन्त्रेणैव प्रतिगृह्णीयादिति । ॥

?I. 164. 21. अविज्ञातायै दान[८] इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

---

१ न्यचानप्रैरिति U D C H; on the instrumental cp. Speyer Sanskrit Syntax § 107.

२ ॰पर्याण॰ instead of ॰परियाण॰ all.

३ Thus Bu U G (sec. m.) and the vivaraṇa; अनुषंगौद्देयतानि H G (pr. m.); अनुषंगाण्येतानि Be; D C corrupt.

४ सकृत् twice U Be.

५ प्रतिग्रह G and U (sec. m.) and the vivaraṇa; ॰ग्रहण G (pr. m.) U (sec. m.) and the other MSS.

६ Thus H G (pr. m.) U D C; ॰थागतं G (sec. m.); ॰थांगतं Bu; ॰स्यागतं Be.

७ Reading, meaning and interpunction doubtful; स्यादागंत्वेवास्यात G (sec. m.); स्यादांगत्वेवास्यात G (pr. m.); स्यादागतेवास्यात Be; स्यादंगत्वेवास्यात U; ॰दंगत्वेवास्यात D; स्यादंगात्वे॰ C.

८ विदान U D Be C; the passage is missing in H.

I. 165. 10. प्रयाण इति ॥ पूर्वः कल्पः शालीकेरुत्तरो बौधायनस्य ॥

I. 165. 12. अथ यद्येनं यान्तं व्रतनवेलोपाधिगच्छतीति ॥ मथित्वाग्नीन्विहृत्य व्रतयेदिति बौधायन ॥ उत्तरतो ऽरणी निधाय[१] दक्षिणतः परिश्रित्य व्रतयेदिति शालीकिः ॥

. 165 14. अथ यद्यपर्याणा अप उपाधिगच्छतीति ॥ सूत्रꣳ शालीकेरत्रो ह स्माह बौधायनो यत्रैवापर्याणा अप उपाधिगच्छेत्तत्रापेद्देवीरापो अपां नपाद्य ऊर्मिर्हविष्य इन्द्रियावान्मदिन्तमस्तान्वो[२] ऽदस्यामीति चीन्लोष्टानाददीत तेषामेकमुदकान्ते निदध्यात्तं वो मावक्रमिषमित्यथान्यं ध्वꣳसयन्समुद्रवेदच्छिन्नं तन्तुमित्यथान्यमुदकान्ते निदध्यात्पृथिव्या अनुगेषमिति मं वा गाहते मं वा तरति सेतुमेव कृत्वात्येतीति ब्राह्मणम् ॥ १० ॥ चतुर्थः ॥ ५ १०

I. 166. 11. रोहिते चर्मणीति ॥ सूत्रं बौधायनस्याप्यरोहितꣳ स्यादिति शालीकिः ॥

I. 166. 12. अꣳशुग्रहणे हिरण्य इति ॥ कुर्यादिति बौधायनो न कुर्यादिति शालीकिः ॥ १५

I. 167. 2. देवयजनस्याध्यवसान इति ॥ सूत्रमाचार्ययोरत्रो ह स्माहौपमन्यवः पुरस्तादेवैतमविध्यगतेषु देवयजनमध्यवसेद्विज्ञायते सा वा इयꣳ सर्वैव वेदिरिति ॥

I. 167. 4. III. 20. 9. (?). आख्यातं प्रायणीयस्य निर्वपणम् ॥ २०

---

१ After निधाय U Be ins. तस्या, C D तस्य ।

२ तान्वो G D C Be, the vivaraṇa; तंवो H U; Bu defective.

I. 167. 12. प्रायणीयस्य अपण इति ॥ पयसि अपयेदिति बौधायनो ॥ ऽप्स्विति शालीकिः ।॥

13. प्रायणीयस्यासादन इति ॥ षड्ढोत्रासादयेदिति बौधायन-स्तूष्णीमिति शालीकिः ।॥

I. 167. 14.५ प्रायणीयस्य चर्याया इति ॥ उपांशु चरेदिति बौधायन ॥ उच्चैरिति शालीकिः ।॥

I. 169. 11 आदित्यस्योदीक्षण इति ॥ हिरण्यमन्तर्धायादित्यमुदीक्षये-दिति बौधायनो ॥ ऽनन्तर्धायैवेति शालीकिः ।॥

I. 169. 13. सोमक्रयण्या अतिवित्सन इति ॥ सदसः काले ऽतिवित्सये-

१० दिति बौधायन ॥ उपरवकाल इति शालीकिः ।॥

I. 169. 15. सोमक्रयण्ये पदस्यानुनिक्रमण[१] इति ॥ अतिक्रान्तायै पृष्ठ्या-कालं दक्षिणस्य पूर्वपदस्यानुनिक्रामेदिति[१] बौधायनो ॥ महा-वेदिमेवातिक्रान्तायै यस्यैव[२] कस्य[२] चेति[२] शालीकिः ।॥

I. 169. 21. सोमक्रयण्ये पदस्य परिलेखन इति ॥ सूत्रं शालीके-

१५ रन्तो ह स्माह बौधायन स्फ्येन च कृष्णविषाणया च पदं परिलिखेदन्तरतः कृष्णविषाणा स्यादिति ।॥ ११ ॥

I. 170. 10. उदपात्रस्योपनिनयन इति ॥ प्रदक्षिणमुपनिनयेदिति बौधायनो ॥ यथोपपादमिति शालीकिः ।॥

१ °नुनिक्र° all (C D only °नुनिष्क्र°) ; this reading (given by Tr) is also to be restored VI. 12 : 169. 16, see TS. VI. 1. 8. 1.

२ यस्यैव कस्यै वेति Bu G. (sec. m.) ; यस्यै कस्य चेति Be ; यकस्य चेति C H D G (pr. m.).

I. 171. 1. राज्ञ उपस्थान इति ॥ स ह स्माह बौधायन उपसा[1] नामेयमोषधिर्भवति[1] तां दूतीं कुर्वीतैष ते गायत्रो भाग इति मे सोमाय ब्रूतादेष ते त्रैष्टुभो भाग इति मे सोमाय ब्रूतादेष ते जागतो भाग इति मे सोमाय ब्रूताच्छन्दोमानाꣳ साम्राज्यं गच्छेति मे सोमाय ब्रूतादित्यृचो[2] ह स्माह ५ शालीकिः प्रत्यक्षः खल्वयꣳ राजा भवति प्रत्यक्षवदेवोपतिष्ठेतैष ते गायत्रो भाग एष ते त्रैष्टुभो भाग एष ते जागतो भागश्छन्दोमानाꣳ साम्राज्यं गच्छेति ॥

I. 171. 9. राज्ञो मान इति ॥ सूत्रं बौधायनस्य निगदश्चैवैतामृचं पञ्च कृत्वो मिमीतेति[3] शालीकिः ॥ १०

I. 172. 5. राज्ञः पणन[4] इति ॥ सूत्रं बौधायनस्य गवा ते क्रीणानीत्येव ब्रूयादिति शालीकिः ॥

I. 172. 8. प्रजाया उपनिग्रहण इति ॥ सूत्रं बौधायनस्यानुपनिगृह्णन्नेवाजां मन्त्रं जपेदिति शालीकिः ॥

I. 197. 1. मैत्रावरुणस्य दण्डप्रदान इति ॥ सूत्रमाचार्ययोरृचो ह १५

---

१ Instead of उपसा नामेय॰ H C D U read उपस्थाना भव॰ ।—॰ओषधिर्भ॰ G (sec. m.), ॰ओषधीर्भ॰ H Bu C D U (pr. m.); ॰ओषधीभिर्भ॰ Be U (sec. m.).

२ The mantras are given partially abbreviated in the MSS.

३ मिमीते इति or मिमीत इति MSS.

४ Thus Bu G (sec. m.) and the vivaraṇa; पण Be H C D U G (pr. m.).

स्माहौपमन्यवः सोमविक्रयिणमुदकुम्भेनोपद्रुत्याचैव[1] मैत्रावरुणाय दण्डं प्रयच्छेदिति ।॥

I. 1?? 11. राज्ञः प्रत्यानहन इति ॥ अन्तर्लोम्ना चर्मणा प्रत्यानह्येदिति बौधायन ॥ ऊर्ध्वग्रीवेण बहिर्लोम्नेति शालीकिः ।॥

I. 173. 21. ईषाया अन्वारम्भ इति ॥ सूत्रं बौधायनस्यानन्वारभ्यैवेषां प्रत्यङ् द्रवन्मन्त्रं जपेदिति शालीकिः ।॥

I. 174. 3. राज्ञः परिवहण इति ॥ प्रदक्षिणं परिवहेदिति बौधायनो ॥ यथोपपादमिति शालीकिः ।॥

I. 174. 7. राज्ञः प्रत्युपस्थान इति ॥ स ह स्माह बौधायनो व्रीहि-

१० भिस्तारणीभ्यां च राजासन्द्या च राजानं प्रत्युपतिष्ठेतेत्य॥न्नो ह स्माह शालीकिरजेन च कर्णगृहीतेनोल्मुकेन[2] च[2] राजासन्द्या च राजानं प्रत्युपतिष्ठेत । सो ऽग्नीषोमीयः पशुः स्यात्सोहः[3] स्यात्तूपरः स्यात्साण्डः स्याच्छ्मश्रुमान्स्यात्पीवान्स्यादिति[4] विज्ञायते ।॥ १२ ॥

---

१ सोमक्रयणम् instead of सोमविक्रयिणम् G (sec. m.); सोमक्रयिणम् U D H C.—०भेनोपद्रुत्या० Bu G (sec. m.); ०भेनोपप्रद्रुत्या० C D H (sec. m.). ०भेनोमद्रुत्या H (pr. m.).

२ ०हीतेन सोमग्रेन U D H C; ०हीतेन सोल्मकेन G.

३ सोहः Bu G and the vivaraṇa; सोमशः H D U C.

४ श्मश्रुमान् G Bu, viv., fails in H U; D Be are defective.—पीवान् Bu U (pr. m.), viv.; पीमवान् Be U (sec. m.); पीतनवा H; D C defective; fails in G (sec. m., first hand invisible). N. B. nomin. पीवान् as Mahābh., not पीवा ।

आतिथ्यस्य बर्हिषः संस्कार इति । अभिदादानप्रभृती-
न्मन्त्रान्साधयेदिति बौधायनः॥ शुल्बप्रभृतीनिति शालीकिः॥
संभरणप्रभृतीनित्यौपमन्यवः ।॥

I 174. 12. आतिथ्यस्य निर्वपण इति ॥ सूत्रꣳ शालीकेर्॥श्चो ह स्माह
बौधायन उभौ विसृज्य राजानं प्रपाद्यातिथ्यं निर्वपेदिति ।॥ ५

I. 175. 14. राज्ञः परिचर्याया इति ॥ सूत्रꣳ शालिकेर्॥श्चो ह स्माह
बौधायन स्वचैव राजानं परिचरेदृत्वार्थ्यमुपनिगृह्णीयादिति ।॥

I. 175. 17. अर्हणा इति ॥ यथागतमर्हयेदिति बौधायनो॥ राजान-
मर्हयित्वर्त्विजो[१] ऽर्हयेदिति शालीकिः ।॥

I. 175. 19. आतिथ्यस्य करण इति ॥ पुरोडाशस्य गौरुस्यातामिति १०
बौधायनः॥ पुरोडाश एवेति शालीकिः ।॥

I 176. 10. आज्यग्रहाणां ग्रहण इति ॥ चतुर्गृहीतानि वा पञ्च-
गृहीतानि वा स्युरिति बौधायनः॥ पञ्चगृहीतान्येवेति
शालीकिः ।॥

I. 176. 18. आतिथ्यस्यासादन इति ॥ चतुर्होत्रासादयेदिति बौधा- १५
यनस्तू॥ष्णीमिति शालीकिः ।॥

I. 176. 19. आतिथ्यस्य चर्याया इति ॥ उपांशु चरेदिति बौधा-
यन॥ उच्चैरिति शालीकिः ।॥

I. 177. 19. तानूनप्त्रस्य भक्षण इति ॥ सूत्रꣳ शालीकेर्॥श्चो ह स्माह

---

१ यथागतम॰ instead of राजानम॰ G U ; C D and H are defective.

बौधायनो निगुप्तमेवैनं[१] निधापयित्वा व्रतकाले व्रतेन सह भक्षयेदिति ॥

19. औपसदस्य बर्हिषः सꣳस्कार इति ॥ असिदादानप्रभृतीन्मन्त्रान्माधयेदिति बौधायनः ॥ शुल्बप्रभृतीनिति शालीकिः ॥

५ संभरणप्रभृतीनित्यौपमन्यवः ॥

ib. उपसदां मन्त्रामन्त्र इति ॥ मन्त्रवत्यः स्युरिति बौधायनस्तूष्णीका इति शालीकिर्यत्पर्याज्यं[२] तत्तूष्णीकꣳ[२] स्यादथेतरन्मन्त्रवत्स्यादित्यौपमन्यवः[२] ॥ सर्वमेवैतत्कर्मावृता कुर्यादित्यौपमन्यवीपुत्रः ॥

१० आहुतीनाꣳ होम इति ॥ सूत्रं बौधायनस्य ॥ प्राचीरेवैता आहुतीः सꣳस्थापयेदिति शालीकिः ॥

). 18. उपसदाꣳ[३] होम इति ॥ सूत्रं बौधायनस्यानत्याक्रम्यैवोपसदो[४] जुहुयादिति शालीकिः ॥

सुत्यां परिशायन इति ॥ अहोरात्रं परिशयीरन्निति

१५ बौधायनो ऽहरेवेति शालीकिः ॥ कर्मणःकर्मणः प्रयुञ्जीतेत्यौपमन्यवः ॥ **१३ ॥ पञ्चमः ॥**

---

१ निगुप्त° Bu G and U (sec. m.), the viv.; नुगुप्त° Be U (pr. m.) G (pr. m.) H D C.

२ Thus G (sec. m.) only, the vivaraṇa of the text proper, and Keś. (**पर्याज्यम् = प्रधानम्** Viv.). All the other MSS. are more or less corrupt.

३ Thus Bu H G D C; °सदो Be U.

४ Thus Bu H U G (pr. m.) D C; °सदां G (sec. m.), °सदं Be.

I. 182. 13. स्तम्बयजुषो हरण इति ॥ सूत्रं बौधायनस्योपरवकाला-
दप्याग्नीध्रो हरेदिति शालीकिः[1] ॥

I. 183. 1; III. 57. 4. आख्यातं चात्वालस्य परिलेखनम् ॥

III. 57. 7. आख्यातं लोकाग्नीनाꣳ हरणम् ॥

I. 215. 5 (?). स्फ्यविघनानामुपस्थान इति ॥ सूत्रꣳ शालीकेरथो ह ५
स्माह बौधायनोऽग्निवत्युत्तरं परिग्राहं परिगृह्य योयुपित्वा
तिर्यञ्चꣳ स्फ्यꣳ स्तब्ध्वा यजमानमुत्करे स्फ्यविघनानुपस्था-
पयेदिति[1] ॥

अग्नीषोमीयस्य बर्हिषः सꣳस्कार इति ॥ असिदादान-
प्रभृतीन्मन्त्रान्साधयेदिति बौधायनः ॥ शुल्बप्रभृतीनिति १०
शालीकिः ॥ संभरणप्रभृतीनित्यौपमन्यवः[1] ॥

अग्नीषोमीयस्य पशोरनुसंव्रज्याया इति ॥ अनुसंव्रजेदिति
बौधायनो ॥ नानुसंव्रजेदिति शालीकिः[1] ॥

I. 183. 18. इध्माबर्हिषोरुपसादन[1] इति ॥ सूत्रमाचार्ययोरथो ह
स्माहौपमन्यवोऽचैवासा आसीनायेध्माबर्हिराहरेत्तदादाय १५
प्राङ्क्यात्कुशहस्तस्य[2] पृष्ठ्याकाशं प्राङ् तृणाग्गच्छेदिति[3] ॥

---

१ ॰वपकवपन the vivarana.

२ Thus G (sec. m.) Be; प्राङ्हीयात्कुश॰ Bu: प्राङ्क्यात्कुश॰ C′; प्राङ्क्यात्कुश॰ U G (pr. m.); प्राङ्क्याकु॰ H; प्राङ्क्त्यकुश॰ D C.

३ Thus G C U C′; सोमस्सरे॰ Bu; सायनगछे॰ H; सूपनामछे॰ Be, सूर्पनागछे॰ D.

I. 184. 3. हविर्धानयोरभ्यावर्तन[१] इति ॥ काष्ठानि वा तृणानि वान्तर्धायाभ्यावर्तयेदिति[१] बौधायनो ॥ ऽनन्तर्धायैवेति[२] शालीकिः ।॥

I. 184. 4. हविर्धानयोः प्रोक्षण इति ॥ तूष्णीꣳ सꣳस्कृताभिरद्भिः ५ प्रोक्षेदिति बौधायनः ॥ कमण्डलुभिरिति[३] शालीकिः ।॥

I. 184. 13. वर्त्मनोरभिहोम इति ॥ सूक्षमौपमन्यवीपुत्रस्याचो ह स्माह बौधायनो दक्षिणस्य हविर्धानस्य वर्तनिमभिजुहुया-त्सर्वा[४] अक्षधुर उपाञ्ज्यात्सर्वतस्य परिमृज्यादित्यचो ह स्माह शालीकिः सर्वा एव वर्तनीरभिजुहुयात्सर्वा अक्षधुर उपाञ्ज्या-१० त्सर्वतस्य परिमृज्यादिति ।॥

I. 185. 16. मेथ्योर्निहनन इति ॥ स ह स्माह बौधायनो दक्षिणस्य हविर्धानस्य दक्षिणतो मेथीं निहन्यादुत्तरस्य दक्षिणत इति ॥ दक्षिणतश्चोत्तरतश्चेति शालीकि॥मध्य इत्यौपमन्यवः ।॥

I. 186. 10. द्वार्बाह्वोः परिषीवण[५] इति ॥ सर्वान्द्वार्बाहून्मन्त्रेण परि-१५ षीव्येदिति बौधायनः ॥ पूर्वौपूर्वाविति शालीकि॥दक्षिणौ-दक्षिणावित्यौपमन्यवः ।॥ १४ ॥

---

१ ॰भ्यववर्तये॰ G (sec. m.) and the vivaraṇa; this might, after all, be the correct reading also VI. 24: 184. 3. (अभ्यववर्तयन्ति).

२ Thus G (sec. m.) C′; नान्तर्धा॰ the other MSS.

३ कमण्डलूभि॰ G (sec. m.), cp. Pāṇ. IV. 1. 71.

४ Emended; वर्तन्यामभि॰ H Be G U D C′; वर्तन्या अभि Bu.

५ Thus C D H G (pr. m.); ॰षिव्यण Be C′; ॰व्ययण Bu G (sec. m.) and the vivaraṇa.

I. 189. 1. औदुम्बर्या अभिहोम इति ॥ सूचमौपमन्यवीपुत्रस्याचो ह स्माह बौधायन एवमेव जुहुदन्तर्धाय[1] हिरण्यमभिजुहुया-दित्युभयोरेव विशाखयोर्हिरण्ये[2] निधायाभिजुहुयादिति शालीकिः ।॥

I. 197. 8. वसतीवरीणां ग्रहण इति ॥ सूचꣳ शालीकेरचो ह स्माह ५ बौधायन उभयतःशुक्रा आदित्यवतीर्वसतीवरीर्गृह्णीयात्ताः शुक्रास्ताभिराप्याययेत्ताभिरभिषुणुयादिति[3] ॥ धिष्णियान्त्सृप्य वसतीवरीर्गृह्णीयादित्यौपमन्यवः ।॥

I. 190. 18. उपरवाणां परिलेखन इति ॥ त्रिस्त्रिरेकैकं परिलिखे-दिति बौधायनः ॥ सकृत्सकृदिति शालीकिः ।॥ १०

I. 191. 7. उपरवपाꣳसूनाꣳ हरण इति ॥ सूचꣳ शालीकेरचो ह स्माह बौधायनो यजमानस्याधस्पदमुपोप्योत्करꣳ हलोप-सृपेदिति[4] ।॥

I. 192. 1. उपरवाणां प्रोक्षण इति ॥ त्रिस्त्रिरेकैकं प्रोक्षेदिति बौधायनः ॥ सकृत्सकृदिति शालीकिस्त्रिस्त्रिरपो ऽवनयेत्तस्मि- १५ न्यवान्प्रस्कन्दयेदित्येवमेवैतत्त्रिविधं कर्म कुर्यादित्यौपमन्यवः ॥ सर्वमेवैतत्कर्मावृता कुर्यादित्यौपमन्यवीपुत्रः ।॥

---

१ °हस्तमन्तर्धाय G (sec. m.); rightly?
२ Thus Bu G, the viv. and Keś; °ण्ये Be H U D C C'.
३ °ताभिरेवाप्या° G (sec. m.).
४ Thus Bu C' U C D G (sec. m.); ऊलो° H; इलो° Be.

93. 4-14. धिष्णियानां निवपन इति ॥ स ह स्माह बौधायनो वेद्यन्त आग्नीध्रीयं निवपेद्वेद्यन्ते मार्जालीयं । धिष्णियान्यु- प्योदीचीनसꣳस्थतां[१] कुर्यादित्य॥थो[१] ह स्माह शालीकिरन्तर्वे- द्याग्नीध्रीयं निवपेदन्तर्वेदि मार्जालीयं । धिष्णियान्युप्य[२]न[२]

५ चोदीचीनसꣳस्थतां[२] कुर्यादिति । ॥

I. 194. 10. वेद्यै स्तरण इति ॥ सूत्रꣳ शालीकेर॥थो ह स्माह बौधायनस्त्रयो दक्षिणतस्त्रय उत्तरतो मध्ये सप्तमः पृष्ठ्या- कालं[३] प्राञ्च स्तृणन्तो गच्छेयुरिति ॥ पुरस्तादेवैनां प्रत्यञ्च स्तृणन्तोऽभ्यवक्रामेयुरित्यौपमन्यवः । ॥

I. 194. 11. १० अग्नीषोमीयस्याज्यानां ग्रहणे सादन इति ॥ सूत्रं बौधायनस्य ॥ पत्नीशाल एवाग्नीषोमीयस्याज्यानि गृहीत्वा- न्तानि खरे सादयेदिति शालिकिः । ॥

I. 194. 13. समन्वानयन इति ॥ सूत्रं बौधायनस्य ॥ नाद्रियेतेति शालीकिः । ॥

---

१ Thus here and l. 5 G (sec. m.); ०संस्थां Be C′; ०संस्थितां Bu ०संस्थितान्कुर्या० U H D C G (pr. m.).—Instead of धिष्णियान् H U D here and l. 4 धिष्णियं ।

२ Thus C D C′ G (sec. m.) Bu; न्युप्यानथोचीनसं० Be; न्युप्योदी- चीनसं० H.

३ Between पृष्ठ्या and कालं Bu G and U (sec. m.) ins. ०स्तरण०, Be C D C′ Keś. omit the word; in H this dvaidham is missing.— ०कालं U G D Keś. and cp. XXI. 14 : 94. 16; ०काले Bu C′, कालें Be.

I. 194. 4. अर्धस्तनव्रतप्रदान इति ॥ समन्वानीय[1] वासमन्वानीय[1] वा[1] पुराणगार्हपत्यमर्धस्तनव्रतं प्रयच्छेदिति बौधायनो ॥ नार्धस्तनव्रतं प्रयच्छेदिति शालीकिः । ॥

I. 195. 1. वैसर्जनानाꣳ होम[2] इति ॥ सूत्रं बौधायनस्य ॥ चत्वारि चतुर्गृहीतानि जुहुयादिति शालीकिः । ॥ ५

I. 195. 7. वसतीवरीणामनुसꣳहरण इति ॥ अनुसꣳहरेदिति बौधायनो ॥ नानुसꣳहरेदिति शालीकिः । ॥

वपानां परिहोम इति ॥ तांतां परिजुहुयादिति बौधायन ॥ आदितश्चान्ततश्चेति शालीकिः । ॥

हृदयशूलानामुद्वासन इति ॥ एकैकश उद्वासयेदिति १० बौधायनः ॥ सर्वांश्चेति शालीकिः । ॥

I. 198. 3. वसतीवरीणां परिहरण इति ॥ सूत्रꣳ शालीकेर्यो ह स्माह बौधायन एवमेवैनाः परिहरन्नपेण यूपꣳ सादयित्वा जघनेन गार्हपत्यमुपसाद्याग्नीध्रे सन्ना अभिन्दप्रेध्यक्षो जाग्रतेति । ॥ १५ ॥ षष्ठः ॥ १५

I. 200. 5. सवनीयस्थाल्यानां ग्रहणे सादन इति ॥ सूत्रं बौधायनस्याग्नीध्र[3] एव सवनीयस्थाल्यानि गृह्णीयात्तानि खरे सादयेदिति शालीकिः । ॥

---

१ In some of the MSS. समन्वानीयवा is found once only, but cp. the vivaraṇa: समन्वामयवासप्रागूर्ध्वं वा ।

२ परिहोम H Bu D C U G (pr. m.), without परि Be G (sec. m.) and the vivaraṇa; C′: वेदसंमार्जनानां होम ।

३ °ग्नीध्रीय U; °ग्नीध्रीये D C (omitting एव ).

200. 17.　औदुम्बराणां महापरिधीनां परिधान इति ॥ सूत्रमाचार्ययोर्॥ त्वो ह स्माहौपमन्यवः सुक्लृप्ता एवैते स्युरिति । ॥

राज्ञ उपावहरण इति ॥ सूत्रमाचार्ययोर्॥ त्वो ह स्माहौपमन्यवः प्रातःसवन एव सर्वेभ्यः सवनेभ्यो राजानमुपावह-
५ रेदिति । ॥

I. 201. 7.　पञ्चहोतुर्होम इति ॥ सूत्रं बौधायनस्य ॥ चतुर्होतारꣳ हुत्वा पञ्चहोतारं जुहुयादिति शालीकिः । ॥

I. 201. 10.　प्रातरनुवाकस्योपाकरण इति ॥ सूत्रमाचार्ययोर्॥ त्वो ह [1]स्माहार्तभागीपुत्रस्तूष्णीकेनैककपालेन[2] प्रातरनुवाकमुपाकुर्या-
१० दिति । ॥

I. 201. 16.　सवनीयानां निर्वपण इति ॥ सूत्रमाचार्ययोर्॥ त्वो ह स्माहौपमन्यवः प्रातःसवन एव सर्वेभ्यः सवनेभ्यः सवनीया-न्निर्वपेदिति । ॥

I. 201. 17.　तेषां व्रीहिष्वेव हविष्कृतमुद्वादयत्युपोप्यच्छन्ते यवानिति ॥
१५ सूत्रꣳ शालीकेर्॥ त्वो ह स्माह बौधायन आवपनप्रभृति यवेषु मन्त्रकर्माभ्यावर्तेत तन्त्रं तु हविष्कृत्[3] स्यादिति । ॥

आज्यनिनयन इति ॥ जघनेन गार्हपत्यमाज्येभ्यो निनये-

---

१ ०र्तभागिपुत्र० G (sec. m.).

२ Thus Bu G (sec. m.) the vivaraṇa; ०तूष्णीमेकेनै० C H U D G (pr. m.); ०तूष्णीमेककपा० Be C′.

३ हविष्कृत् G U; हविषूत् D H C; हविष्कृत Bu; हविष्कृतं Be C′; cp. XXI. 4: 75. 7; XXII. 11.

दिति बौधायनो ऽग्रेणातिहायेति शालीकिरग्रेण वा जघनेन वेत्यौपमन्यवः ॥

I. 202. 1. पात्राणाꣳ सादन इति ॥ सूत्रꣳ शालीकेर्नो ह स्माह बौधायनः खरे पात्राणि सादयेत्तेषां यथार्थमाददीतेति ॥

I. 203. 9. अथैकधनाग्ऽस्तातीन्द्राय वो जुष्टाग्ऽस्तामीति वा तूष्णीं वेति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥ १६ ॥ ५

I. 203. 14. अंशोः प्रस्कन्दन इति ॥ होतृचमसमादध्यांशुं प्रस्कन्दयेदिति बौधायनो वामतीवरात्कलशादिति[1] शालीकिः ॥

I. 203. 21. क्रतुकरण इति ॥ सूत्रं बौधायनस्य यथांक्रत्वेवास्य क्रतुकरणानि कुर्यादिति शालीकिः ॥ १०

I. 204. 8. दधिग्रहस्य ग्रहण इति ॥ सूत्रꣳ शालीकेर्नो ह स्माह बौधायन औदुम्बरेणैनं पात्रेण गृहीत्वाहुत्वा चैतत्पात्रमग्नेवानुप्रहरेदिति ॥

I 205. 2. दक्षिणायै दान इति ॥ सूत्रं द्वैधमेवैतद्भवति ॥

I. 205. 7. तासु निग्राभ्यासु यजमानं वाचयतीति ॥ सूत्रꣳ शालीकेर्नोह स्माह बौधायन ऊरौ वोरसि वोपनिगृह्य तासु निग्राभ्यासु यजमानं वाचयतीति ॥ १५

205. 17. राज्ञो निर्वपण इति ॥ सूत्रमाचार्ययोर्नो ह स्मास्त्रौपमन्यवः प्रातःसवन एव सर्वेभ्यः सवनेभ्यो राजानं निर्वपेदिति ॥ २०

---

१ Thus Bu G H ; ०तीवरीकलशा० Be C' ; ०तीवरीक U.

I. 206. 11. सो ऽꣳशौ स्कन्ने वाचयतीति ॥ सूत्रं बौधायनस्योपाꣳशा-
वेवाꣳशौ स्कन्ने वाचयेदिति शालीकिः ॥

I. 2?3. 16 उपाꣳश्वन्तर्यामयोर्होम इति ॥ सूत्रं बौधायनस्याभावेवो-
दिते जुहुयादिति शालीकिरभावेवानुदिते जुहुयादित्यौ-
५ पमन्यवः ॥

I. 207. 11; 209. 8. आग्रयणस्य ग्रहण इति ॥ सूत्रꣳ शालीकेरचो ह स्माह
बौधायनो द्वयोर्धार्योः प्रातःसवने गृह्णीयात्तिसृणां माध्यं-
दिने सवने चतसृणां तृतीयसवन इति ॥

I. 211. 18. द्रप्सानुमन्त्रणीयास्विति ॥ सूत्रं बौधायनस्य स्रुवा-
१० हुतीरेवैता[१] जुहुयादिति शालीकिः ॥ १७ ॥

I 212. 4. पवमानग्रहाणां ग्रहण इति ॥ सूत्रं बौधायनस्य
मजुष्टान्परिसृज्य सादयेदिति शालीकिः ॥

I. 212. 13. संतनीनाꣳ[२]होम इति ॥ सूत्रꣳ शालीकेरचो ह स्माह
बौधायनो वसतीवरीरध्येतैर्मन्त्रैरवनयेदिति ॥

I. 212. 8. १५ पवमानानामुपाकरण इति ॥ सूत्रं बौधायनस्य सदस
एव बर्हिषी आदायोपाकुर्यादिति शालीकिः ॥

I. 212. 14. ब्रह्मण उपवेशन इति ॥ यथा सदस्येवमुपविशेदिति
बौधायनो यथा दर्शपूर्णमासयोरेवमिति शालीकिः ॥

१ Thus, and cp. XXV. 18, H D C U G; ०रेवैता Bu; ०वैना Be C′.

२ Thus (with न) G (sec. m.) U; संततीनां the other MSS., cp. XXV. 18.

I. 212. 14. यजमानस्योपवेशन इति ॥ यथा सदस्येवमुपविशेदिति बौधायनो ॥ यथा दर्शपूर्णमासयोरेवमिति शालीकिः ॥

I. 212. 19. अथोद्गात्रे वा प्रस्तोत्रे वा बर्हिषी प्रयच्छतीति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

I. 212. 19. ऋक्सामयोरुपस्तरणमसि मिथुनस्य प्रजात्या इति वा तूष्णीं वेति । पूर्वः कल्पः शालीकेरुत्तरो बौधायनस्य ॥ ५

I. 213. 5. पञ्चम्यां प्रस्तुतायां वाचयतीति ॥ सूत्रं बौधायनस्य ॥ यस्यामेव कस्यां चिद्वाचयेदिति शालीकिः ॥

I. 213. 16. सप्तहोतुर्होम इति ॥ सूत्रं बौधायनस्यानुसवनमेव सप्तहोतारं जुहुयादिति शालीकिः ॥ १०

I. 213. 19. धिष्णियानां विहरण इति ॥ स ह स्माह बौधायन आग्नीध्रीयादङ्गारानादाय[१] तत आग्नीध्रीये प्रस्कन्दयेद्यथानुपूर्वमितरेषु धिष्णियाष्विहृत्योदीचीनसंस्थतां[२] कुर्यादित्यथो ह स्माह शालीकिराग्नीध्रीयादङ्गारानादाय तत आग्नीध्रीये प्रस्कन्दयेद्यथानुपूर्वमितरेषु धिष्णियान्विहृत्य न चोदीचीनसंस्थतां[३] कुर्यादिति ॥ १५

---

१ °ग्नीध्र° and °ग्नीध्रीय° the MSS. promiscue; the vivaraṇa and Keś. always °ग्नीध्रीय°।

२ Thus G D C U (pr. m.) संस्थिताम U (sec. m.), °सस्थतां H; °संस्थां Bu; Be C' defective.

३ Thus U (sec. m.) D C C'; °संस्थानं G (sec. m.); °संस्थानं Bu; संस्थावां H Be U (pr. m.) G (pr. m.).

I. 214. 1.　धिष्णियानां व्याघारण इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

स्वरुशनस्योत्पादन इति ॥ यूपः स्वरुशनमुत्पादयेदिति बौधायनः ॥ पशुरिति शालीकिस्त्वमित्यौपमन्यवो ॥ देवते-
५ त्यौपमन्यवीपुत्रः । ॥ **१८ ॥ सप्तमः ॥**

I. 215. 16.　सर्पण इति ॥ सूत्रं बौधायनस्यापरदारिक[1] एव यजमानः स्यादिति शालीकिः ।॥

तार्तीयसवनिकेषूक्थ्यविग्रहेष्विति ॥ स ह स्माह बौधायनः प्रसर्पेदेव तार्तीयसवनिकेभ्य उक्थ्यविग्रहेभ्यः षोडशिने[2]
१० रात्रिपर्यायेभ्यो राथंतराय संधय इत्यथो ह स्माह शालीकिस्तृतीयसवनातिवृद्धिरेवैषा[3] भवति । 'यदेव तृतीयसवने प्रसर्पेत्तत्प्रसृप्तमेव[4] तेषाᳫं[4] स्यादिति ॥ प्रातःसवन एव सर्वेभ्यः सवनेभ्यः संप्रसर्पेदित्यौपमन्यवः ।॥

I. 217. 13.　आभिचार्ये मन्त्रामन्त्र इति ॥ मन्त्रवती च स्यात्सर्वाणि
१५ च सवनान्यनुसमियादिति[5] बौधायनस्तूष्णीका च स्यात्-

---

१ ०पराद्वारि० U D C H Be C′; cp. XXI. 9: 86. 7.

२ ०शिने G Be; ०शिनि Bu H U C D C′.

३ ०मातिष्टद्धि० Be G (sec. m.); ०नांतष्टद्धि० C D U; ०नंतष्टद्धि० H G pr. m.); माभिष्टद्धि० Bu C′ and the vivaraṇa.

४ ०मेवैतेषु G (sec. m.); ०मेषां H.

५ ०नुसमीया० MSS.

र्वाणि च सवनान्यनुसमियादिति[१] शालीकिर्मन्त्रवती च स्यात्प्रातःसवने चैवैषा स्यादित्यौपमन्यवः । ॥

I. 217. 11. सवनीयानामुद्वासन इति ॥ सूत्रं बौधायनस्य ॥ नाना-पात्रीष्वेव[२] सवनीयानुद्वासयेदिति शालीकिः । ॥

I. 217. 16. प्रातः प्रातःसावस्येति ॥ सूत्रं बौधायनस्य ॥ प्रातःसावस्येत्येव ५ ब्रूयादिति शालीकिः । ॥

सवनीयानामनुसंहरण इति ॥ अनुसंहरेदिति बौधा-यनो ॥ नानुसंहरेदिति शालीकिः । ॥

I. 218. 8. प्रतिनिर्ग्राह्याणां[३] ग्रहण इति ॥ सूत्रं बौधायनस्य ॥ द्विदेवत्येभ्य एव प्रतिनिर्ग्राह्यान्निगृह्णीयादिति[४] शालीकिः । ॥ १०

I. 218. 13. आघार इति ॥ सूत्रं बौधायनस्य ॥ यथादेवैतमाघार-माघारयेदिति शालीकिर्द्रोणकलशात्परिप्लुता पात्रेणेत्यौप-मन्यवो ॥ यजुरेवैतत्स्रुपेणैतमाघारमाघारयेदित्याश्मरथ्यः[५] । ॥

---

१ ॰नुसमीया॰ MSS.

२ Thus Be C′ and the viv., ॰पात्रेषु Bu G U D C Keś ; ॰पात्रेष्वेव H.

३ ॰निर्ग्रा Be C′ H U D C G (pr. m.) ; निग्रा॰ Bu G (sec. m.) and the vivaraṇa.

४ निर्गात्यानिगृह्णी॰ G (sec. m.) but the r effaced, Be H C D U ; ॰निग्रात्यांनिगृह्णी॰ Bu ; ॰नर्ग्राह्यानिगृह्णी॰ C′ ; ॰निग्राह्यान्गृह्णी॰ Keś. ; read probably (with Keś.) ॰निर्ग्राह्यान्गृह्णीयादिति ।

५ Thus G (sec. m.) ; ॰श्वैवमाघार॰ Be H U C D ; ॰श्वैतमाघारये॰ C′ ॰श्वैतमाघारये॰ G (pr. m.) Keś. ; ॰रेवचदेवैतमाघारमा॰ Bu.

I. 220. 9.　मꣳस्रावस्यापिधान इति ॥ सूत्रं बौधायनस्य ॥ यावानेव[१] मꣳस्रावः स्यात्तमपिदध्यादिति शालीकिः ।॥

I. 220. 14.　चमसानामायातन[२] इति ॥ अग्रेण स्रुचः[३] प्राच[३] आयातयेदिति बौधायनो ॥ जघनेन स्रुच उदीच आयातयेदिति ५ शालीकिः ।॥ १९ ॥

I. 221. 4.　ग्रहयोः संधान इति ॥ अरत्नी च ग्रहौ च संदध्यातामिति बौधायनो ॥ ग्रहावेवेति शालीकिः ।॥

I. 222. 12.　शुक्रवतो मन्थिवत इति ॥ सूत्रं बौधायनस्य ॥ मन्थिवत इत्येव ब्रूयादिति शालीकिः ।॥

I. 222. 20. १०　मन्थिमꣳस्रावस्य होम इति ॥ सूत्रꣳ शालीकेर॥न्यो ह स्माह बौधायन आहवनीयादेवोदीचोऽङ्गारान्निर्वर्त्य तेषु मन्थिनः[४] मꣳस्रावं[४] जुहुयादिति ।॥

होत्रकचमसानाꣳ[५] होम इति ॥ स ह स्माह बौधायनः शुक्रामन्थिभ्यामेनान्सह सकृज्जुहुयाद्विरभ्युन्नीतानित्य॥न्यो ह १५ स्माह शालीकिर्नैनाञ्छुक्रामन्थिभ्याꣳ सह सकृज्जुहुयाद्विरेवाभ्युन्नीतानिति ।॥

---

१ यावानच U D C; यावामेव Be; यावानच H.

२ ॰मायतन MSS. and the vivaraṇa.

३ Thus G (sec. m.) Bu; स्रुच उदीच H U C; स्रुच only, Be D C′.

४ मंथिसंस्रा॰ G (sec. m.).

५ Thus G (sec. m.) and C′ only; होत्रचमसानां the other MSS. and the vivaraṇa.

I. 223. 17. द्विदेवत्यानां भक्षण इति ॥ सूत्रं बौधायनस्य ॥ प्राणेषूपनिग्राहं द्विदेवत्यान्भक्षयेदिति शालीकि॥ दीर्घभक्षेणैवैनान्भक्षयेदित्यौपमन्यवः[१] ॥

I. 224. 7. अथैतानि द्विदेवत्यपात्राण्यरिक्तानि करोतीति ॥ सूत्रं बौधायनस्य ॥ सोमेनैवैतान्यरिक्तानि स्युरिति शालीकिः ॥ ५

I. 224. 10. अथैनानि दक्षिणस्य हविर्धानस्योत्तरस्यां वर्तन्याᳬ सादयतीति ॥ सूत्रं बौधायनस्याधस्तादेवैनान्युपहृव्यस्य[२] सादयेदिति[३] शालीकिः ॥

वाचि वाचं दधामीति[३] वा तूष्णीं वेति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥ १०

होत्रकचमसानां प्रतिभक्षण इति ॥ प्रतिभक्षयेदिति बौधायनो ॥ न प्रतिभक्षयेदिति शालीकिः ॥

I. 229. 6. प्रत्यभिमर्शन इति ॥ सूत्रᳬ शालीकेर्॥चो ह स्माह बौधायनो भक्षयन्नेव[४] भक्षाणां पारे प्रत्यभिमृशेतेति ॥

---

१ दीर्घभक्षेणैनै° MSS., only C' भक्षणेवैना° ; cp. XXV. 20.

२ Uncertain; °न्युपहवस्यासाद° G (sec. m.); all the other MSS. °न्युपहव्य आसाद°. The vivaraṇa: अधस्तादेव दक्षिणस्योपहन्यस्य द्रोणकलशसमीपे; could उपहन्यस्य be the correct reading?

३ Thus Bu C D G U C'; ददामीति H Be. In the text proper no vikalpa of the kind here mentioned, is found; neither is the yajus to be traced in any text. Perhaps this dvaidham is to be taken together with the foregoing one.

४ Thus G (sec. m.) and the vivaraṇa; भर्क्षनेव Bu; भक्षनेव H Be U D G (pr. m.) C C'.

I. 233. 1. ऐन्द्राग्नस्य ग्रहण इति॥ सूत्रमाचार्ययोर्॥ त्रो ह स्माह दीर्घवात्स्यो मुख्येनैनं पात्रेण गृह्णीयादिति। ॥

I. 230. 1. नाराशंसानामनुप्रकम्पन इति॥ अनुप्रकम्पयेरन्निति बौधायनो॥ नानुप्रकम्पयेरन्निति शालीकिर्॥ नैनानुपोद्यच्छेरंस्-

५ स्नेनेत्यौपमन्यवः। ॥ २० ॥ अष्टमः ॥

I. 234. 13. माध्यंदिनीये ऽभिषव इति॥ नवकृत्वोनवकृत्वो ऽभिषुत्य निग्राभमुपेयुरिति बौधायनो॥ ऽपरिमितमिति शालीकिः। ॥[१]

I. 235. 9. मरुत्वतीययोर्ग्रहण इति॥ सूत्रं शालीकेर्॥ त्रो ह स्माह बौधायन उपरिष्टादेवाग्रयणाद्गृह्णीयादिति। शाह्यलीको ह्येष

१० भवतीति। ॥

I. 236. 10. अष्टम्यां प्रस्तुतायां वाचयतीति॥ सूत्रं बौधायनस्य॥ यस्यामेव कस्यां चिद्वाचयेदिति शालीकिः। ॥

I. 237. 3. दधिघर्मस्य ग्रहण इति॥ सूत्रं बौधायनस्याग्नीध्र॥ एनं गृह्णीयादिति शालीकिः॥ परिश्रित्योभयतः शान्तिं कृत्वा-

१५ ग्नीध्र एवेत्यौपमन्यवः। ॥

दधिघर्मस्य चर्याया इति॥ उपांशु चरेदिति बौधायन॥ उच्चैरिति शालीकिः। ॥

I. 237. 16. दधिघर्मस्य भक्षण इति॥ सूत्रं शालीकेर्॥ त्रो ह स्माह

---

[१] After this dvaidham G U D H C ins. प्रातःसवन एवैषा स्यादित्यौपमन्यवः सवनीयासुद्वासन इति सूत्रं बौ० स्य नानापात्रेष्वेव सवनीयानुद्वासयेदिति शा० किः। cp. XXI. 19: 104. 3.

बौधायनो ऽवभ्रभक्षणेनैवेतरे भक्षयेयुर्यजमान एव प्रत्यक्षं भक्षयेदरण्ये[१] ऽनुवाक्येन[१] मन्त्रेणेति । ॥

I. 240. 20. दक्षिणानामत्याकरण[२] इति ॥ सूत्रं शालीकेर्‌ो ह स्माह बौधायन एकामेव दक्षिणां दक्षिणापथेनात्याकुर्यादितरा[३] यथावकाशं गच्छेयुरिति । ॥ ५

संचर[४] इति ॥ नीतासु दक्षिणासु[५] यथार्थं संचरेरन्निति बौधायनो ॥ नासंस्थिते सोमे ऽध्वर्युः प्रत्यङ् सदो ऽतीयादिति शालीकिः । ॥

I. 259. 7. कृष्णविषाणायाः प्रासन इति ॥ सूत्रं बौधायनस्य ॥ नीतासु दक्षिणासु चात्वाले कृष्णविषाणां प्रास्येदिति शालीकिः । ॥ १०

I. 241. 9. आत्रेयस्य संवदन[६] इति ॥ सूत्रं शालीकेर्‌ो ह स्माह बौधायनस्त्रिरेवाभ्युतिषजन्पृच्छेत्क[७] आत्रेयः क आत्रेय इति । ॥ २१ ॥

---

१ Thus G U (pr. m.), viv., Keś.; °ण्येनानुवा° Be U (sec. m.); °ण्येनवा° Bu H D C, °ण्येवानुवा° C′.

२ Thus Be C′ Bu and the vivaraṇa (one copy) °त्याशमय U H G D C and the vivaraṇa (another copy).

३ °कुर्याद° Be Bu C′; °शामयेद° U H G D C.

४ संचरण Bu.

५ Between दक्षिणासु and यथार्थं the MSS. exc. Be C′ and Keś; ins. चात्वाले, clearly interpolated from the following dvaidham.

६ Thus Bu C′ G (sec. m.), the vivaraṇa; संवादन Be H C U D G (pr. m.).

७ Thus Bu Be G C′; त्रिरेवव्यति° H U D C.

I. 241. 13.    दक्षिणानां दान इति ॥ स ह स्माह बौधायनो महर्त्विग्भ्य एना[१] दद्यान्न होत्रकाननुसंचरेरन्निति ॥ न च होत्रकाननुसंचरेरन्न च सदस्याय दद्यान्न ह्येतस्यानुख्या विज्ञायत इति शालीकिः । ॥

I. 242. 8.५    मरुत्वतीययोर्होम इति ॥ स ह स्माह बौधायनो यमेवाध्वर्युर्जुहुयात्स वषट्कृतानुवषट्कृतः स्यादथेतरो ऽननुवषट्कृतः[२] स्यादित्युभावेवाननुवषट्कृतौ[३] स्यातामिति शालीकिरुभावेवानुवषट्कृतौ स्यातामित्यौपमन्यवः । ॥

I. 242. 13.    तृतीयस्य मरुत्वतीयस्य ग्रहण इति ॥ सूत्रमाचार्ययोरुभयो ह स्माह दीर्घवात्स्यो मुखेनैनं पात्रेण गृह्णीयादिति ॥ ॥

I. 243. 5.    नाराशंसानामनुप्रकम्पन इति ॥ अनुप्रकम्पयेरन्निति बौधायनो ॥ नानुप्रकम्पयेरन्निति शालीकिर्नैनानुपोषयेरञ्सनेत्यौपमन्यवः । ॥

I. 244. 2.    सौम्यस्य मन्त्रामन्त्र इति ॥ मन्त्रवान्स्यादिति बौधायनस्तूष्णीक इति शालीकिः ॥ सौम्य एव मन्त्रवान्स्यात्तूष्णीक एककपाल इत्यौपमन्यवः । ॥

245. 11.    तार्तीयसवनिके ऽभिषव इति ॥ सूत्रं बौधायनस्य ॥ यदाप्याययति तेनांशुमदित्येव ब्रूयादिति शालीकिः । ॥

---

१ एना Bu G; एनां H Be C′ U D C; एव the vivaraṇa.

२ Emended; नानुव॰ or नानव॰ MSS.

३ Thus Be C′ U; ॰भावेवानु॰ H D C; ॰भावेव वषट्कृतानुवषट्कृतौ G (sec. m.).

I. 245. 19. आदित्यग्रहस्य ग्रहण इति ॥ सूत्रं शालीकेर्वो ह स्माह बौधायनः पुरस्तादेनमभिषवाद्गृह्णीयात्तूष्णीं[1] शृतातङ्क्यमवनयेदिति ॥

I. 246. 12. आदित्यग्रहस्योदाहनन इति ॥ अर्धर्चश उदाहन्यादिति बौधायन ॥ ऋचर्चेति शालीकिः ॥ ५

I. 247. 11. मैत्रावरुणस्य श्रयण[2] आशिरो[2] ऽवनयन[2] इति ॥ सूत्रं शालीकेर्वो ह स्माह बौधायनः श्रीणीयादेव मैत्रावरुणं पयसाशिरमवनयेदिति ॥

I. 248. 5. नवम्यां प्रस्तुतायां वाचयतीति ॥ सूत्रं बौधायनस्य यस्यामेव कस्यां चिद्वाचयेदिति शालीकिः ॥ १०

I. 249. 17, 250. 6. होत्रकाणां[3] संतर्पण इति ॥ सूत्रं शालीकेर्वो ह स्माह बौधायनो ऽनुसवनमेव होत्राः[4] संतर्पयेदिति ॥ पश्च प्रातःसवने षण्माध्यंदिने सवने सप्त तृतीयसवन इत्यौपमन्यवः ॥

I. 251. 1. औपासनेष्विति ॥ स ह स्माह बौधायनो ऽनुसंप्रज्यौपासनाननुमन्त्रयेत चमसेभ्यश्च पुरोडाशशकलानुपास्येद्व चैव १५

---

१ पुरस्तादेवाभि॰ G (sec. m.); पुरस्तादेवमभि॰ D C H.

२ Emended; श्रयणाशिरोवनयन Bu G and the vivaraṇa; श्रयणाशिरयोरवनयन H U D C; श्रयणीशिरोवनयन Be C′.

३ होत्रकाणां Be G (sec. m.) C′, the vivaraṇa; होत्राणां Bu; होत्रणां G (pr. m.); होत्रणां H U D C.

४ होत्राः Bu G (sec. m.); होत्रकान् Be C′ H U D C G (pr. m.).

षड्ढोतारं व्याचक्षीतेत्यु॥ हो ह स्माह शालीकिरनुसंव्रज्यैवौपासनाननुमन्त्रयेत पार्श्वतस्समवेभ्यः[१] पुरोडाशशकलानुपास्येदुपरिष्टाच्च षड्ढोतारं व्याचक्षीतेति । ॥ २२ ॥ नवमः ॥

I. 251. 6. सावित्रस्य ग्रहणे सादन इति ॥ सूत्रं बौधायनस्य । सजुष्टं परिमृज्य सादयेदिति शालीकिः । ॥

I. 252. 5. तदन्यतो-मदं प्रतिगृणातीति ॥ सूत्रं बौधायनस्य ॥ मदा मोद[२] इत्येवेव[३] प्रतिगृणीयादिति शालीकिः । ॥

I. 252. 11. नाराशꣳसानामनुप्रकम्पन इति ॥ अनुप्रकम्पयेरन्निति बौधायनो । नानुप्रकम्पयेरन्निति शालीकि॥र्नैनानुपोह्यच्छेरꣳ-१० श्नेत्यौपमन्यवः । ॥

सौम्यस्य चर्याया इति ॥ उपाꣳशु चरेदिति बौधायन ॥ उच्चैरिति शालीकिः । ॥

I. 253. 5. सौम्यस्य परीज्याया इति ॥ स ह स्माह बौधायनो यदि चैव[३] समस्तौ यदि च विहृतावग्नाविष्णू उपाꣳश्वेव स्याता-१५ मिति ॥ समस्तावुपाꣳशु विहृतावुच्चैरिति शालीकिः । ॥

I. 248. 12. तार्तीयसवनिकानां धिष्णियानां विहरण इति ॥ सूत्रꣳ शालीके॥र्हो ह स्माह बौधायनश्चरित्वा वाचरित्वा वा सौम्येनाङ्गारैश्चतुर्धिष्णियान्विहरेदिति । ॥

१ पार्श्वतः om. Be C′.

२ मोदैवेत्येव G (sec. m.) only.

३ एव om. Be Bu D U (pr. m.).

I. 254. 6. पात्नीवतस्य श्रयण इति ॥ सूत्रं बौधायनस्य ॥ दध्ना वा पयसा वा पात्नीवतꣳ श्रीणीयादिति शालीकि ॥ धिष्णियानां व्याघारणशेषेणाज्येन पात्नीवतꣳ श्रीणीयादित्यौपमन्यवः । ॥

I. 254. 14. पत्न्या उदानयन इति ॥ सूत्रं बौधायनस्याचैवासीतापो-ष्ठिष्ठीयाभ्य इति शालीकिः । ॥

I. 255. 14. तदुभयतो-मदं[1] प्रतिग्टणातीति ॥ सूत्रं बौधायनस्य ॥ मोदा मोद[2] इवेत्येव[2] प्रतिग्टणीयादिति शालीकिः । ॥

I. 255. 17. ध्रुवस्य प्रच्यावन इति ॥ सूत्रं बौधायनस्य ॥ सर्व एवैषो ऽवनयनमन्त्रः स्यादिति शालीकिः । ॥ २३ ॥

I. 256. 14. चमसानामायातन[3] इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

I. 256. 15. तेषु चीꣳस्त्रीꣳस्य दूर्वापर्णीम्प्रास्यत्येकैकं च दर्भपुञ्जील-मिति ॥ सूत्रं बौधायनस्याङ्किरेवैते दध्नाः[4] स्युरिति शालीकिः । ॥

I. 256. 21. श्रौपयजेष्विति ॥ सूत्रꣳ शालीकेरचो ह स्माह बौधायन आग्नीध्रादग्नीषोमीयस्य[5] च सवनीयस्य चाङ्गारानाहरे-च्छामित्रान्मैत्रावरुणे वशाया इति । ॥

---

१ ०मदं all, against VIII, 15 : 255. 14.

२ मोदेवेत्य॰ G D C C'.

३ ०मायतन all exc. C.

४ ? दध्ना Bu C', दध्नाः G (sec. m.), दध्ना Be, H U D C omit the word altogether. The vivaraṇa has: अङ्किरेव चाभ्यो दर्भमोया इति ।

५ Thus, and comp. vol. I l.c., H G U (pr. m.) C D, the vivaraṇa; ०ग्नीभीषा० Be C' U (sec. m.) Bu Keś.

. 258. 8. मिन्द्राकृत्योर्होम इति ॥ सूत्रमाचार्ययोरेत्तो ह स्माहौप-
मन्यवः पुरस्तान्मिन्द्राकृती जुहुयान्मिन्द्राकृती कृत्वा हारि-
योजनं ग्रहं गृह्णीयादिति ॥

258. 10. शाकलैश्चर्याया इति ॥ सूत्रं शालीकेरेत्तो ह स्माह
५ बौधायनो यावन्त्येनांसि कृतान्यभिविजानीयात्तेषामवयजन-
मसीत्यभ्यादध्यादिति ॥

. 258. 15. आदित्यस्योपस्थान इति ॥ सूत्रं बौधायनस्याहवनीयमेवै-
तेन यजुषोपतिष्ठेरन्निति शालीकिः ॥

I. 259. 8. कृष्णविषाणायाः प्रासन इति ॥ पूर्वः कल्पो बौधायन-
१० स्योत्तरः शालीकेः ॥

. 259. 12. अवभृथ इति ॥ सूत्रमाचार्ययोरेत्तो ह स्माहौपमन्यवो
ऽत्रैवैनं[१] स्थण्डिले कुम्भमिश्रं प्ररोप्य स्थालीभिश्च ग्रावोवाय-
व्येन चावभृथमवेयादिति ॥

261. 12. ग्रावोवायव्यस्य प्रप्लावन इति ॥ सूत्रं बौधायनस्य प्रचा-
१५ ल्योदाहरेयुरिति शालीकिः ॥ प्रचाल्यैवैता स्थालीरुदाहरे-
युस्तास्वेतानि देविकाहवींषि अपयेयुरिति बौधायनः
प्रप्लावयेयुरेवेति[२] शालीकिः ॥ २४ ॥

ib. कृष्णाजिनस्य प्रप्लावन इति ॥ सूत्रं शालीकेरेत्तो ह
स्माह बौधायनः कृष्णाजिनमुन्मुच्याद्भिरभ्युक्ष्य पुत्राय वान्ते-

---

१ चैवैत्थं Bu G D C; चेवैन H U (pr. m.); चैवैतत् U (sec. m.), ।नत् Be C′.

२ एव only in G (sec. m.).

वासिने वा दद्यात्स्रुचोपधानं[१] वैनत्कुर्वीतापि वैनेन पुनर्दीक्षेतापि वैनेन पुनर्यजेतेति ।॥

I. 262. 6. उदयनीयस्य बर्हिषः सꣳस्कार इति ॥ अमिदादामप्रभृतीन्मन्त्रान्साधयेदिति बौधायनः ॥ ध्रुवप्रभृतीनिति शालीकिः ॥ संभरणप्रभृतीनित्यौपमन्यवः ।॥ ५

ib. उदयनीयस्य निर्वपण इति ॥ स्रुचि वावधाय[२] चामकाषꣳ स्थाल्यां[३] वा सचामकाषायां[४] निर्वपेदिति[४] ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ।॥

I. 262. 9. उदयनीयस्य श्रपण इति ॥ पयसि श्रपयेदिति बौधायनो ॥ ऽप्स्विति शालीकिः ।॥ १०

चरोरनुपरिहरण इति ॥ अनुपरिहरेदिति बौधायनो ॥ नानुपरिहरेदिति शालीकिः ।॥

उदयनीयस्यासादन इति ॥ पश्चोभासादयेदिति बौधायनस्तूष्णीमिति शालीकिः ।॥

उदयनीयस्य चर्याया इति ॥ सूत्रं बौधायनस्याहवनीय १५ एवोदयनीयेन चरेदिति शालीकिः ।॥

263. 2, 5. अनूबन्ध्यस्य[५] करण इति ॥ सूत्रं बौधायनस्य ॥ मैत्रावरु-

---

१ स्रुचोपधानं all the MSS.; स्रुचोप॰ Keś.; स्रुचा निधानार्थं स्रुचः the vivaraṇa.

२ वांतर्धाय H D G U C C′.

३ स्थाल्या G (sec. m.) Be C′.

४ ॰कायायेति G (sec. m.); ॰कायवैदिति C′

५ अनू॰ G (sec. m.) C′ and the vivaraṇa; अनु॰ the other MSS.

ण्यामिच्चया[१] यजेतेति शालीकिरन्यो ह स्माहौपमन्यवो ऽजं[२] पशुमप्यत्रालभेतैकादशप्रयाजं त्वेव तन्त्रꣳ संतिष्ठापयिषेदिति ॥

वपानां परिहोम इति ॥ तांतां परिजुहुयादिति बौधा-
५ यन आदितश्चान्ततश्चेति शालीकिः ॥

हृदयशूलानामुद्वासन इति ॥ एकैकश उद्वासयेदिति बौधायनः सर्वान्सहेति[३] शालीकिः ॥ २५ ॥

उखण[४] इति ॥ सर्वान्गोपशूनुखयेदिति बौधायनो ऽन्यत्रर्षभाच्च वशायै चेति शालीकिः ॥

63. 5.१० आमिक्षायै मन्त्रामन्त्र इति ॥ मन्त्रवती स्यादिति बौधायनस्तूष्णीकेति शालीकिः ॥

63. 6. मैत्रावरुणे परिधिष्विति ॥ सूत्रꣳ शालीकेरन्यो ह स्माह बौधायनः पूर्वे स्थूणे सदसो वा हविर्धानयोर्वा भित्त्वा वैदलकान्परिधीन्मैत्रावरुणे[५] कुर्यादिति ॥

---

१ वा ins. G.

२ ज Bu.

३ सर्वाणि instead of सर्वान् some of the MSS.; some omit सह ।

४ Thus G (sec. m.) and the vivaraṇa of our passage, उखिण a copy of the vivaraṇa of the text proper; उखुण Bu; उखकरण Bc C′ U (sec. m.); उखयण C D H U (pr. m.) G (pr. m.) and a copy of the vivaraṇa of the text proper.

५ वै(बै)दलकान् all (and thus also the Karmānta, XXV. 26), exc. G (sec. m.), which has वैदलान् ।

I. 263. 8. उदवसान इति ॥ सूत्रं बौधायनस्य ॥ पूर्णाहुत्यैवोदवस्ये-
दिति शालीकिः । ॥

I. 263. 12. दक्षिणायै दान इति ॥ सूत्रं बौधायनस्य ॥ नाचाकाम-
नियतं[1] देयमिति शालीकिः । ॥

I. 263. 13. देविकाहविषां करण इति ॥ सूत्रमौपमन्यवीपुत्रस्याचो ह ५
स्माह बौधायनस्त्रीण्यनूबन्ध्यस्य पशुपुरोडाशमनुवर्तरंस्त्री-
ण्युदवसानीयामिति ॥ सर्वाण्येवानूबन्ध्यस्य पशुपुरोडाशमनु-
वर्तरन्निति शालीकिराज्येनैव देविका यजेतेत्याश्मौगविः । ॥

I. 264. 5. अग्निभिः प्रत्यवसान इति ॥ अजस्रैः प्रत्यवस्येदिति बौधा-
यनो ॥ ऽरण्योः समारोह्येति शालीकिः । ॥ १०

I. 264. 7. अग्निहोत्रयोः प्रतिहोमः इति ॥ प्रतिजुहुयादिति बौधा-
यनो ॥ न प्रतिजुहुयादिति शालीकिर्न प्रतिजुहुयादिति
शालीकिः[2] । ॥ २९ ॥ दशमः ॥

॥ इत्येकविंशः[3] प्रश्नः ॥

---

१ Uncertain reading: नाचाकामयतो G (sec. m.); नाचाकामन्नितं Be C' (but न्न corrected into य); नाचकामनियतं C; नाचकामनिश्चतं H; नाचकामनिषतं D; नाचकामनिश्चतं C'; नाचकामनियति Bu. The vivarana, although my copy of it is rather bad, seems at least to point to चकाम॰ as it runs: इतरोकामस्यानियतो नियमः।

२ The repetition of the finishing words not found in the MSS.

३ On the prasna- number cp. Preface to Vol. II, p. II.

II. 1. 1. अथातोऽग्निकल्पं व्याख्यास्यामः ॥

II. 1. 11. खरस्य करण इति ॥ उत्तरपूर्वे ऽवान्तरदेशे कुर्यादिति बौधायन ॥ उत्तर एवेति शालीकिः ॥

II. 1. 20. सावित्राणाꣳ होम इति ॥ सूत्रं बौधायनस्य ॥ सम्भृत्या-
५ प्यत्र चतुर्गृहीतं जुहुयादिति शालीकिः ॥

II. 2. 6. गर्दभरशनाया आदान इति ॥ मन्त्रेणाददीतेति बौधायनस्य ॥ तूष्णीमिति शालीकिः ॥

II. 1. 9. वल्मीकवपायै निधाने वैश्वस्योपवेशन इति ॥ सूत्रꣳ शालीकेरत्रो ह स्माह बौधायनो वल्मीकवपां निदध्यान्न
१० वैश्यमुपवेशयेद्यत्र खनिः[१] स्यात्तद्गच्छेद्यस्तत्र पृच्छेत्तं प्रतिब्रूयादिति ॥

II. 3. 6. खनन इति ॥ अर्धर्चशः खनेदिति बौधायन ॥ ऋचर्चेति शालीकिः ॥

II. 3. 10. पुष्करपर्णेनोत्तरदण्डेन सꣳस्तृणातीति ॥ सूत्रं बौधाय-
१५ नस्य ॥ यथोत्पन्नेनैव सꣳस्तृणीयादिति शालीकिः ॥

II. 3. 14. पिण्डानाꣳ हरण इति ॥ सूत्रꣳ शालीकेरत्रो ह स्माह बौधायनः सर्वाभिःसर्वाभिश्चतुर्हरेदिति ॥ गायत्रीभिर्हरेत्त्रिष्टुब्भिः सादयेदित्यौपमन्यवः ॥

II. 4. 8. अश्वस्यात्यायमन इति ॥ सूत्रꣳ शालीकेरत्रो ह स्माह
२० बौधायनस्तूष्णीमश्वमत्यायच्छेत्सर्व एवैष गर्दभमन्त्रः स्यादिति ॥

१ खनि or खनी the MSS. खनिः भाविता स्यात् the Mahāgnisarvasva.

II. 4. 12. द्यावापृथिव्योः समीक्षण इति ॥ उभे यङ्कृतः समीक्षेतेति बौधायनस्त्रि रेवेति शालीकिः प्राच्यां दिशि संधिमीक्षमाण एतं मन्त्रं जपेदित्यौपमन्यवः ॥

II. 4. 16. अपो रशने अभ्यवहरन्त्यपि वाद्भिरभ्युक्ष्य मुञ्चत इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥ १ ॥ ५

II. 5. 11. उखानां करण इति ॥ स ह स्माह बौधायनो ऽषाढामप्येतस्ये याजुष्ये पादमात्रीं[1] कुर्याद्यावन्मात्रीं चाद्यायेष्टकामृत्तिकायामपिसृजेदेवमस्य[2] सर्वो ऽग्निर्याजुषो भवतीत्यैकामेवोखां मन्त्रेण कुर्यात्तूष्णीमितरे इति शालीकिः ॥

सर्वासु भिन्नासु प्रत्यय इति ॥ स ह स्माह बौधायनः १० समाविचं मन्त्रकर्माभ्यावर्तयेदिति[3] ॥ यदन्यत्साविचेभ्य इति शालीकिः ॥

II. 6. 4. अथादत्त एकविंशतिं वृष्णो अश्वस्य शकृत्पिण्डानभिमग्निं पचनमिति ॥ सूत्रं बौधायनस्य यस्यैव कस्य चाश्वस्याददीतेति शालीकिः ॥ १५

II. 6 5. उखानां धूपन इति ॥ सूत्रं बौधायनस्यापरिमितैर्मन्त्रैर्धूपयेदिति शालीकिः ॥

---

१ पाद० B U and G (sec. m.) Bu; पद० Be C′ U and G (pr. m.).

२ ०मृत्तिकायामपि० B G (sec. m.); the vivaraṇa: सर्वेष्टकार्थायां (या the Ms.) मृदि, the Ms.: सर्वेष्टकार्थायां (या the Ms.) मृत्तिकायाम्।

३ Thus G, U (sec. m.) and the Ms.; मंत्राकर्मा० B; मंत्रकर्मभ्यावर्त० Bu; कर्माभ्यावर्त० Be C′.

II. 6. 11. उखानां प्रवृञ्जन इति ॥ सूत्रं बौधायनस्यैकामेवोखां मन्त्रेण प्रवृञ्ज्यात्तूष्णीमितरे इति शालीकिः ॥

II. 6. 14. ताः प्राचीर्वोदीचीर्वायातयतीति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

II. 6. 15. ५ पचन इति ॥ स ह स्माह बौधायन उखा ऋषभान्मण्डलेष्टका वार्हस्पत्यं महावीरं लोकंपृणा इत्येतद्गार्हपत्यात्पचेदथेतरद्ग्रामाग्नेरिति यत्किं चेष्टकोक्तं ग्रामाग्निना तत्पचेद्धविरुक्तं गार्हपत्यादिति शालीकिः ॥

II. 8. 7. पशुशीर्षाणां करण इति ॥ प्रत्यक्षाणि वा मार्त्तिकानि
१० वा स्युरिति बौधायनः प्रत्यक्षाण्येवेति शालीकिर्हिरण्मयानीत्यौपमन्यवो वायव्यग्निरसि वैतान्मन्त्रान्निगदेदित्यौपमन्यवीपुत्रः ॥

II. 9. 4. चिरपसर्वैः पर्णशाखया परिकर्षतीति ॥ सूत्रं बौधायनस्यानुपरिकीर्येव माषान्यमगाथाभिः परिगायेदिति
१५ शालीकिः ॥

II. 10. 9. आघार इति ॥ उभाभ्यां मन्त्राभ्यामेतमाघारमाघारयेदिति बौधायनो हिरण्यगर्भः समवर्त्तताग्र इत्येतयैवैतमाघारमाघारयेदिति शालीकिः ॥ २ ॥ प्रथमः ॥

अनिष्टप्रथमसोमस्याध्वरदीक्षाहुतीनाꣳ होम इति ॥
२० अध्वरदीक्षाहुतीर्हुत्वाग्निका जुहुयादिति बौधायन आग्निका एवेति शालीकिः ॥

II. 11. 12. वैराजीषु दीक्षास्विति ॥ स ह स्माह बौधायनो नासं-

त्सरꣳ सोऽग्न्यैराजीदीक्षाः कुर्वीत । कामꣳ संवत्सरꣳ सोऽग्न्यैराजीदीक्षाः कुर्वीत । संवत्सरं वा अत्यैकाह्निकं[1] कुर्वीतैकाह्निकस्त्वेवाग्निरिति[2] शालीकिः ॥

II. 13. 7. काम्यस्यान्ववधान[3] इति ॥ जाते काम्यमन्ववदध्यादिति[4] बौधायनः ॥ पुरस्तादेवेति शालीकिः ॥ ५

II. 13. 18. औदुम्बरीणाꣳ समिधामभ्याधान इति ॥ सूत्रं शालीकेरत्रो ह स्माह बौधायन एकामेव समिधं पशुर्येनाभ्यादध्यात्तदेव रात्रोऽग्नꣳ स्यादिति ॥

II. 15. 14. अन्नपतीयायै समिधो ऽभ्याधान इति ॥ सूत्रꣳ शालीकेरत्रो ह स्माह बौधायनो ऽन्नपतीयां प्रतिसमेधनीयां वैष्णवीमित्येता अभ्यादध्यादिति ॥ १०

II. 16. 2. वात्सप्रविष्णुक्रमयोः संनिपात इति ॥ अन्तरतः संनिपातयेदिति बौधायन ॥ आदितस्त्वन्ततश्चेति शालीकिः ॥

उख्य उद्वाते प्रायश्चित्तकरण[5] इति ॥ स ह स्माह बौधा-

---

१ Thus G U C′ and the Ms.; अत्यैकाह्निकं B Bu; अत्येकाहं Be.

२ According to the vivaraṇa of this dvaidham, given in Ms. the इति, which is missing in all the MSS., ought to be inserted before ऐकाह्निकस्त्वे॰ ।

३ Thus U (sec. m.) C′; ॰स्यान्वाधान the other MSS.

४ Thus B Be C′ Bu G (sec. m.) U (sec. m.); ॰न्वादध्या॰ G (pr. m.) and the Ms.

५ प्रायश्चित्तस्य करण G (sec. m.) U.

संपरिस्तीर्य पात्राणि निर्णिज्य सꣳसाद्याज्यं विलाप्योपास्ते । ऽपरः[1] प्रतिप्रस्थाता प्रोक्षणीः सꣳस्कृत्य पात्राणि प्रोक्षेदाज्यं निरुप्याधिश्रित्य पर्यग्नि कृत्वा स्रुचः संमार्ष्टि । ता उत्तरवेदिꣳ हरन्ति प्रोक्षणीस्तथाध्वर्युराग्नेय्यर्चा स्रुचो ऽभिमृशति । संमृष्टानि द्विधा पात्राण्यभिमृक्ष्यन्त[2] इति । वायव्यया वायव्यान्यैन्द्र्या[3] सद्रो । ऽथैष उन्नेता ग्रावोवायव्यꣳ संप्रक्षाल्य द्रोणकलशे दशापवित्रे समवधाय दक्षिणस्य हविर्धानस्य पुरोऽक्षꣳ सꣳसादयत्युपकल्पयते प्रतिप्रस्थाता पृषदाज्याय दध्याग्नीध्र इध्माबर्हिरुपसादयत्यथ प्रतिप्रस्थाता पत्नीमभिसंनह्येत्यौरोडाशिकेनाथैनां गार्हपत्यमीक्षयेदथैनामाज्यमवेक्षयित्वाज्येनाद्रवेत्यत्वा[4] तदेवेक्षितमुपयच्छीत[5] तेजो ऽसीत्यथैनच्छ्रक्षलेनोपयत्य हरेत्तेजो ऽनु प्रेहीत्यथैनदाहवनीये ऽधिश्रयेदग्निस्ते तेजो मा विनैदित्यथैनद्धूलोत्तरेण प्रोक्षणीः सादयित्वावेक्षेतीत्युनुयादाज्यवतीभ्यां प्रोक्षणीः प्रसिद्धमाहव-

---

१ ऽपरः U (pr. m.), परः D C, श्वपरः Ben (pr. m ), श्वपरः the other MSS. H. wholly corrupt.

२ Uncertain reading °म्रक्ष्यन्त Ben. °म्रक्ष्यंत G (sec. m.), °मक्ष्यंत G (pr. m.), °म्रक्ष्यात Be C U, °म्रमात D, °म्रक्ष्यंत D. The Viv. (one copy) °मक्ष्य changed into °म्रक्ष्य, and thus also the other copy.

३ °यैन्द्रिया G C.

४ °नोद्रवे° again G.

५ °यच्छीत G (sec. m.), U (pr. m.) D C Ben, °यच्छेत G (pr. m.) Be H U (sec. m.).

नीयन्सकाशे पृषदाज्यवन्त्याज्यानि गृह्णीते । सिद्धमत ऊर्ध्वम् ।
॥ १४ ॥

98. 17. अथ शालीकैरेवमेवैषां यथासंप्रैषं विहितानि कर्माणि भवन्त्यथाध्वर्युराग्नेय्यर्चाग्नीध्रमभिमृशेद्वैष्णव्या हविर्धानमित्य-
थैनेऽपरमत्यथैष आग्नीध्रः पूर्वः पत्नीशालं हुत्वाग्निमुपसमाधाय संपरिस्तीर्य पात्राणि निर्णिज्य सꣳसाद्याज्यं विलाप्योपास्ते । ऽथापरः प्रतिप्रस्थाता प्रोक्षणीः सꣳस्कृत्य पात्राणि प्रोक्षेदाज्यं बिलेष्वधिश्रित्य पर्यग्नि कृत्वा स्रुचः संमार्ष्टि । ता आग्नीध्रꣳ हरन्ति प्रोक्षणीश्चाथाध्वर्युराग्नेय्यर्चा स्रुचो ऽभिमृशति ।
१० संमृष्टानि द्विधा पात्राण्यभिमृश्यन्त[1] इति । वायव्यया वायव्यान्यैन्द्र्या[2] सदो । ऽथैष उन्नेता ग्रावोवायव्यꣳ संप्रक्षाल्य द्रोणकलशे दशापवित्रे समवधाय दक्षिणस्य हविर्धानस्य पुरोऽक्षꣳ सꣳसादयत्युपकल्पयते प्रतिप्रस्थाता पृषदाज्याय दध्याग्नीध्र इध्माबर्हिरुपसादयति । न प्रतिप्रस्थाता पत्नीमभि-
१५ सन्नह्येत्यौरोडाशिकेन[3] । नैनां[3] गार्हपत्यमीक्षयेदथैनामाज्यमवेक्षयत्याज्येनाद्रवेत्यत्या[4] तदवेक्षितमुपयच्छीत[5] तेजो ऽसीत्य

---

१ ॰सन्नह्यंत Be G, -सन्नह्यत U C, ॰सन्नह्यंत D; H and Ben. abbreviate this passage.

२ ॰न्यैन्द्रिया G U C, ॰न्येंद्रीया Be.

३ Thus G (pr. m.) D Be C Ben; ॰केनैनां G (sec. m.) H; ॰केनैनां U (sec. m.).

४ ॰न्तीद्रवे॰ again G.

५ ॰यच्छीत all (H. abbreviates).

थैनच्छकलेनोपयत्य हरेत्तेजो ऽनु प्रेहीत्यथैनदाग्नीध्रीये ऽधिश्रयेदग्निस्ते तेजो मा विनैदित्यथैनदुल्मुकोत्तरेण प्रोक्षणीः सादयित्वावेक्षेतोत्पुनुयादाज्यवतीभ्यां प्रोक्षणीः। प्रसिद्धमाग्नीध्रीयसकाशे पृषदाज्यवन्त्याज्यानि गृहीत्वा परिकर्मिभ्य उत्प्रदाय प्रोक्षणीहस्त उत्तरेणाग्नीध्रीयं धिष्णियं प्रतिपद्यते। ५ ऽन्वञ्च आज्यैरथैषां प्रोक्ष्य वेदिं प्रोक्ष्य बर्हिः प्रोक्ष्य बर्हिरासन्नं प्रोक्ष्योपनिनीय पुरस्तात्प्रस्तरं गृहीत्वैकविधं[१] बर्हिः[१] स्तीर्त्वा[१] प्रस्तरपाणिः प्राङभिसृप्यौदुम्बरान्परिधीन्परिधायोर्ध्वे समिधावभ्याधाय बर्हिर्मुष्टिं विधृती प्रस्तरमित्येतत्समादाय प्रदक्षिणमावृत्य पूर्वया द्वारा हविर्धानं प्रपद्योत्तरार्धे खरस्य १० बर्हिर्मुष्टिं स्तृणीयाद्बर्हिषि विधृती। विधृत्योः प्रस्तरं। प्रस्तरे जुहूं। बर्हिषीतरा। एता असदन्निति समभिमृश्य योगेन युनक्ति। सिद्धमत ऊर्ध्वम्। ॥ १५ ॥ नवमः ॥

किमग्निहोत्रो दीक्षितः किमौपसदः किंप्रसुत इति। विज्ञायते व्रतमेव दीक्षितस्याग्निहोत्रं। घर्मोच्छिष्टमौपसदस्यो- १५ पांश्वन्तर्यामौ[२] प्रसुतस्य। यो ह्यनुदिते स सायमग्निहोत्रभक्तिर्य उदिते स प्रातरग्निहोत्रभक्तिः। किंदर्शपूर्णमास[३]

---

१ The three words एक ०ब० स्तीर्त्वा effaced in G.

२ Thus G U D C Be; ०पसदसुपांश्व० H, ०पसदमस्यापांश्व० Ben, the Vivaraṇa also has औपसदस्य।

३ Thus Be G U (sec. m.), the Viv.; ०दर्शपूर्णमासस्य H, दार्श (or दर्श) पौर्णमासस्य (or सस) H D C Ben (pr. m.), all without इति; °मास इति Ben (sec. m.), °दर्शपौर्णमास इति U (pr. m.).

इति । विज्ञायते पौर्णमासं यज्ञमग्नीषोमीयं पशुमकुर्वत
II. 99. 11. दार्शं यज्ञमाग्नेयं पशुमकुर्वतेति । यथो एतदौपमन्यवस्य कल्पं
वेदयन्ते प्रातःसवन एव सर्वेभ्यः सवनेभ्यः सवनीयान्निर्वपेत्सकृ-
दुपहितान्येव कपालानि स्युर्नो समभिवासनात्सꣳसृष्टं कर्म
५ तायते[१] । तेषामेकैकमुद्वासयेदनुसवनं येनयेन प्रचरिष्यन्स्या-
दपि वा व्यभिमृष्टानां पिण्डानां परिशाययीतेतरयोः[२] सवनयो-
र्यद्येककपालश्चिकीर्षितः[३] स्यात्प्रातःसवनिकैरेव[४] वर्तयेत्कृतान्ता-
त्पौरोडाशिकं कर्म प्रत्याददीतेतरयोः[५] सवनयोरनुसवनमङ्गा-
राध्यूहनेनैव कपालेषु प्रतिपद्येत । सिद्धमत ऊर्ध्वम् ।
१० ॥ १६ ॥ दशमः ॥

1. 96. 6 यथो एतद्बौधायनस्य कल्पं वेदयन्त उभयतःशुक्रा आदि-
त्यवतीर्वसतीवरीर्गृह्णीयात्ताः शुक्रास्ताभिराप्याययेत्ताभिर-
भिषुणुयादित्युपर्यर्धꣳ होतृचमसं कुर्वत्येतेनैवापि तृतीयेन
वर्तयेत्तयोरपः पूर्वया द्वारा हविर्धानं प्रपादयेद्धोतृचमसीया
१५ वसतीवरीया मैत्रावरुणचमसीया इति दक्षिणेन होतारं
परिगृह्यापरया[६] द्वारैकधनानेतस्मिꣳस्स्य काले सर्वत्र एव मैत्रा-

---

१ Thus Ben, ज्ञायते C D, तायत H (reading एषाम् instead of तेषाम्), वर्तयेत् G Be U (sec. m.) and the Viv.

२ इतरयोः Be G (pr. m.), उत्तरयोः Ben C U D G (sec. m.).

३ यद्येक° H and the Viv., यदेक° G U Ben Be; C defective.

४ °सवनिकै° G U D, Viv., °सवनीकै° the other MSS.

५ उत्तरयोः MSS.

६ परिप्रगृह्या° Be U.

वरुणचमसीयाः पर्यस्येत्तृतीयं वसतीवरीणामवनयेत्तृतीयमेक-
II. 190. 12. धनानामेवमस्य प्राक्केवलः शुक्रो भवति। सोमग्रहं गृह्णीयाद्ब्र-
ह्मवर्चसकामस्येत्यनिरुक्तस्यैवैष राज्ञो ग्रहीतव्यो भवति। का
उ खलु देवताः प्रथमꣳ सोमं भक्षयन्तीत्यपि इत्येव ब्रूया-
द्विज्ञायत उपहूताः सोमस्य पिबतोपहूतो युष्माकꣳ सोमः ५
पिबत्विति। क उ खलु सोमस्य सोमपीथो भवतीति।
विज्ञायते यत्ते सोमादाभ्यं नाम जागृवि तस्मै ते सोम
सोमाय स्वाहेत्येष एवापि सोमस्य सोमपीथस्तेषाꣳ संनिपति-
तानामानुपूर्वतेति[१]। निग्राभ्यासु वाचयित्वादाभ्येन चरेदथो-
पाꣳशुसवनमाददीताथ राजानं निर्वपेत्सिद्धमत आग्निष्टोमिकं १०
कर्म जानीयादा फलकयोरभिमर्शनात्फलके अभिमृश्य
पृश्निभिश्चरेदथ प्राणग्रहैश्चरेदथाꣳशूनुपसंगृह्णीयादथाꣳशुना
चरेदथोपाꣳशुना। काले ऽन्तर्यामेण। सिद्धमत ऊर्ध्वम्।

॥ १७ ॥ एकादशः ॥

[II. 101. 7. यथो एतद्बौधायनस्य कल्पं वेदयन्त आग्रयणस्य ग्रहणे १५
द्वयोर्धारयोः प्रातःसवने गृह्णीयात्तिसृणां माध्यंदिने सवने
चतसृणां तृतीयसवन इत्युपाꣳश्वन्तर्यामयोश्च सꣳस्रावः संततस्य
शुक्र एते द्वे प्रातःसवने। संततस्यैव शुक्र आग्रयणस्योदचनेन

---

१ Thus G U D, ॰पातितानां॰ H Ben, ॰पतितानां॰ C, ॰पीथानां Be.—॰मानुपूर्वतेति G U (sec. m.), ॰मानुपूर्वते H, मानुपूर्वतेति Be, ॰मानुपूर्व्येतेति Ben U (pr. m.), ॰मनुपूर्व्येतेति C D.

च[1] तृतीया माध्यंदिने सवन । आदित्यस्थाल्यामतिशिष्टो[2]
राजादित्यग्रहस्य च सꣳस्राव आग्रयणस्यैवोद्वचनेन[3] च चतुर्थी
तृतीयसवने । संपूतꣳ राजानं त्रयेण श्रीणीयात्पयसा सक्तु-
भिर्हिरण्येनेति । स यं कं चन ग्रहं गृह्णात्युभयत[4] उद्बुध्नꣳ
५ हिरण्यश्रयणमेवैनं करोति । तिष्ठता ग्रहा होतव्या अन्यत्र
[I. 101. 9.] प्राजापत्याच्च मन्थिसꣳस्रावाच्चेति । यथो एतच्छालीकेः कल्पं
वेदयन्ते द्रप्सानुमन्त्रणीयास्विति स्रुवाहुतीरेवैता जुहुयात्क-
स्मिन्नु खल्वेनाः काले जुहुयादिति । संततीर्ह्वेतस्मिन्नेनाः[5]
I. 212. 6. काले जुहुयादित्यथोखेतरित्याह प्राञ्चꣳ राजानं पूतभृतमभि
१० संपवयताद्दशाभिराधवनीयं मृष्ट्वा न्युब्जतादित्युक्तसंप्रैष[6] एष
प्रैत[7] आवकाशेभ्यो । ऽवकाशैरुपस्थाय दशाभिरेवैनं[8] मृष्ट्वा
न्युब्जति । ॥ १८ ॥

समानं कर्माश्विनाद्ग्रहादित्या[9] धिष्ण्यव्याघारणसंपा-

---

१ Given by G U D only.

२ ०स्थाल्या ग्रति० Ben H.

३ एव om. Be G U D.

४ गृह्णीयादिति instead of गृह्णाति Be G (sec. m.).

५ संततो० Be, सततीर्ह्न० H.

६ Thus Ben H, ०त्युक्ताः सं० the other MSS.

७ प्रेते G U D C, एते Be, द्राते Ben, H. corrupt.

८ Thus G (sec. m.) U D, दशभिरेनं C, दशाभिरेवैनां the other MSS.

९ Viv. : समानं कर्माश्विनाद्ग्रहादिति यथोच्यते (e.g. XI. 3 : 67. 17) तथा-
यमेव विधिः ।

I. 213. 20.तादित्येष समुद्देशो[१] भवति। कथमु खलु धिष्णियानां यथान्युप्तं व्याघारणं भवतीति। विभुवे प्रवाहणाय स्वाहेति व्याघार्य रौद्रेणानीकेन पाहि माग्ने पिपृहि मा मा मा I. 214. 8.हिꣳसीरिति। सप्त वृणीत इति। होतैवैषाꣳ सप्तमो भवत्य-हर्गण उत्तरेष्वहःसु प्रातःसवनिकं प्रसर्पणं कथꣳ स्यादित्या- ५ हवनीयोपस्थानप्रभृतीत्येव ब्रूयात्सकृत् स्फ्यविघनानामुपस्थानं। I. 217. 6.कथमु खल्वेषां विसꣳस्थितसंचरः स्यादित्यन्तरेण होतुश्च धिष्णियं ब्राह्मणाच्छꣳसिनश्च ये ऽधिष्णिया। अथ धिष्णिय-वन्तः स्वꣳस्वमेव धिष्णियमुत्तरेण परिक्रामेयुरथेमावध्वर्यू अचमसौ[२] भवतः। क्व उ खल्वेतयोर्भक्षो भवतीति। होतृच- १० मस इत्येव ब्रूयात्क्व उ खल्वृत्विजामेकाहे सोमं न भक्षयन्ती-त्युन्नेता ग्रावस्तुत्सुब्रह्मण्य इत्येव ब्रूयात्क्व उ खलु सत्त्रे दीक्षिता भक्षयेयुरिति। नेष्टुश्चमस उन्नेता भक्षयेदच्छावाक-चमसे ग्रावस्तुदुद्गातृचमसे[३] सुब्रह्मण्यो। ऽपि वा सर्व एवाग्नी-ध्रचमसे भक्षयेयुर्विज्ञायत उत्तरस्यां ततौ[४] तेषां य एवाग्नीध्रः १५ स ग्रावस्तुत्स सुब्रह्मण्यः स उन्नेतेति। ॥ १९ ॥ द्वादशः ॥

I. 217. 11.
III. 104. 7. यथो एतद्बौधायनस्य कल्पं वेदयन्ते समानपात्र्यामेव

---

१ °देश्यो G (sec. m.).

२ Thus H Ben (pr. m.) C D U (pr. m.), °मसिनौ Ben (sec. m.) Be G U (sec. m.).

३ °द्गातुश्चमसे H only.

४ See XVII. 21 : 301. 2.

सवनीयानुद्वासयेत्पुरोडाशस्यैवैषो ऽलङ्कारो दृष्टो भवति[१] । मध्यतः पुरोडाशमुपस्तीर्णाभिघारितमुद्वासयेत्पुरस्ताद्धाना दक्षिणतः करम्भं पश्चात्परिवापमामिक्षामुत्तरतः । कथमु
217. 13. खल्वेषाꣳ संचरो[२] स्यादिति । प्रज्ञातो हविष्पथो । ऽथापरं ।
५ पूर्वया द्वारोपनिर्हृत्यापरया द्वारा सदः प्रपाद्याग्रेण कर्तृन् जघनेन धिष्णियानुत्तरेणाच्छावाकस्य धिष्णियं पर्याहृत्यान्यस्मै प्रदायैतेनैव यथेतमेत्योत्तरेण सदः परीत्य पूर्वया द्वारोपनिर्हृत्योत्तरेणाग्नीध्रीयं पर्याहृत्यान्तर्वेद्यासादयेदध्वर्युस्तद्धविर्धानं[३] प्रपन्नः स्यदुपनिष्क्राम मा त्वाभिपरिहारिष-
I. 218. 12. १० मित्येव ब्रूयाद्यो एतद्बौधायनस्य कल्पं वेदयन्ते द्विदेवत्येषूत्तरतस्तिष्ठते प्रतिप्रस्थात्रे प्रतिनिर्ग्राह्यं[४] प्रयच्छतीति यदाध्वर्युः पुरोडाशान्प्रत्यङ् हरेत्तद्धविर्धानं प्रपद्यमानं प्रतिप्रस्थातारं परिगृह्णीयाद्ग्रहावादायोपनिष्क्रामत्युपनिष्क्रान्तस्यैवाध्वर्युर्ग्रहावादत्ते । ऽपरेण परिक्रान्तायोत्तरतस्तिष्ठते प्रतिप्रस्थात्रे

---

१ °तीति Ben.

२ Thus Ben C U and G (pr. m.) the Viv. (one copy); संचरि D H the Viv. (another copy), संचारो Be G (sec. m.), संचरः U (sec. m.). The Viv.: संचरणं संचरो गमनं तस्यास्ति संचरी (°रि) मार्गः । cp. XXVI. 24.

३ Thus H G (pr. m.) Kes'., the other MSS. ins. अथ before अध्वर्यु°

४ प्रतिनिग्रा° Ben Be and one copy of the Viv.

प्रतिनिर्ग्राह्यं[1] प्रयच्छतीति । हुत्वा व्यवनीय[2] प्रदक्षिणमावृत्य[2] प्रतिप्रस्थाताध्वर्युं परिगृह्णीयादथाध्वर्युः प्रतिप्रस्थातारं प्रत्यङ् द्रवन्यात्रेण । मिद्धमत ऊर्ध्वमथेमे द्विदेवत्या अननुवषट्कारा भवन्ति । क्व[3] उ खल्वेषामनुवषट्कारो भवतीति । विज्ञायते द्विदेवत्यानृतुयाजान्यश्च पात्नीवतो ग्रहः । आदित्यग्रह- ५
III. 106. 2. सावित्रौ[4] तान्स्म[5] मानुवषट्कृथा[5] इति । यथो एतदौपमन्यवस्य कल्पं वेदयन्ते द्विदेवत्येषु दीर्घभक्षेणैवैनाम्भक्षयेद्भक्षेहि[6] माविशेति प्रतिपद्य कले दक्षाय रायस्पोषाय सुवीरताया इत्यातः । प्रत्यभिमृशते मा मा राजन्विबीभिषो मा मे हार्दि त्विषा वधीः । वृषणे शुष्मायायुषे वर्चस इत्यथानु- १०
सवनभक्षेणैव[7] सवनमुखीयान्भक्षयेदिति । ॥ २० ॥ चयोदशः ॥

क्व उ खलु वसतीवरस्य स्तोत्रभक्तिर्भवति शस्त्रभक्तिश्चेति । विश्वरूपासु हास्य स्तोत्रभक्तिर्भवति प्रातरनुवाके[8] ह शस्त्रभक्तिः । क्व उ खलूपांश्वन्तर्यामयोर्द्विदेवत्यानां स्तोत्रशस्त्र-

---

१ प्रतिनिग्रा° Ben Be and one copy of the Viv.

२ °नीयाप्रदक्षिण° G U D C.

३ क्व उ U Be Ben C, Viv., क्व G H.

४ °सावित्रं Be Ben (sec. m.), °सावित्रान् Ben (pr. m.)

५ Thus G (pr. m.) U D C and cp. Āśv. śrs. v. 5. 21 (Vait. sū. 20. 4); मास्मतानुवष° Ben (pr. m.), मास्मताननुवष° G (sec. m.). तास्माभानुवष° H, ममास्मतानुवष° Be.

६ °भक्षणेनैवै° Be G.

७ °भक्षणेनैव Be G U (sec. m.).

८ °वाको Be G C U (sec. m.).

भक्तिर्भवतीति। यदुपांशुग्रहं गृह्णाति तदुपांश्वन्तर्यामयोः।
226. 1. प्रउग उक्थे[१] द्विदेवत्यानामथायं प्रतिप्रस्थातर्तुग्रहेष्वध्वर्योरन्त-
रतःसेवी भवतीतस्यामुतस्य यन्तं प्रतिप्रस्थाताध्वर्युं परिगृह्णी-
यादथाध्वर्युः प्रतिप्रस्थातारं प्रत्यङ् द्रवन्पात्रेण। सिद्धमत
५ ऊर्ध्वं। किंदेवत्या उ खल्वृतुयाजा भवन्तीत्यृतुदेवता
इत्येतदेकमथापरमिन्द्रꣳ होता यजति। मरुतः पोता यजति।
ग्रावो नेष्टा यजत्यग्निमाग्नीध्रो यजतीन्द्रं ब्राह्मणाच्छꣳसी
यजति। मित्रावरुणौ मैत्रावरुणो। देवं द्रविणोदां चत्वारो।
ऽश्विनाध्वर्यू अध्वर्यू[२]। अग्निं[२] गृहपतिं गृहपतिः। क उ
१० खल्वैन्द्राग्नस्य स्तोत्रभक्तिर्भवतीति। बहिष्पवमान इत्येव ब्रूयाद्ये
के चन ग्रहा अस्तोत्राः पवमान एव[३] तेषाꣳ[४] स्तोत्राणि
भवन्ति[४]। क उ खलु माध्यंदिनीयाः सवनीया निरुप्यन्त इति।
क्षुल्लकवैश्वदेवस्य स्तोत्र इत्येव ब्रूयात्क[५] तृतीयसवनीया।
माहेन्द्रस्य स्तोत्र इत्येव ब्रूयात्। ॥ २१ ॥
१५ नाराशꣳसमुपदस्तꣳ ऋतादेवैनꣳ[६] होतृचमसादृत्वीया-

---

१ Thus U (sec. m.), Viv.; उक्थो G U (pr. m.), उकथ्ये Be Ben H C. Acc. to the Viv. it is synonymous to शस्त्रे।

२ Thus G U D C; अध्वर्यवोग्निं Ben H Be.

३ Thus G Be, एवैतेषां Ben D H U C.

४ भवंतीति Ben H.

५ उ खलु ins. G U D C.

६ Thus G U (sec. m.), ऋतादेनं H D C U (pr. m.), ऋतादेवैनं Ben (sec. m.) Be, ऋतादेनं Ben (pr. m.)

द्विनाराशꣳसं प्रातःसवनं च माध्यंदिनसवनं चैकनाराशꣳसं तृतीयसवनं। चत्वार्युन्नीयमानसूक्तानि[१] भवन्तीति[२]। सवन-मुखेषु[३] चाच्छावाकचमसे[३] च[३]। त्रयो दीर्घभक्षाः। क उ खलु प्रवर्ग्यः सुत्यमहरनुसमेतीति। दधिघर्म इत्येव ब्रूया-
I. 234. 1.त्किमुपसदाꣳ। सौम्यस्य परीज्येति। तिरश्चर्मन्फलके ग्राव्णो- ५
द्वादयतीति। शुष्काभिषव इत्येतदाचक्षते। कथमु खलु रथंतरपृष्ठे माहेन्द्रं ग्रहं गृह्णीयान्नाहाꣳ इन्द्रो य ओजसेत्येतया गायत्र्या माहेन्द्रं गृह्णीयादथ बृहत्पृष्ठे महाँ इन्द्रो नृवदा चर्षणिप्रा इत्येतया त्रिष्टुभा माहेन्द्रमथोभयपृष्ठे[४] यथा पृष्ठं तथा गृह्णीयात्पुरोरुचमितरां कुर्यादिति। ॥ २२ ॥ चतुर्दशः ॥ १०

कथमु खलु सवनीयस्य पशोस्त्र्यीया उपक्रमो भवती-तीडसूनꣳ सꣳस्तीर्य पृषदाज्यं विहृत्य[५] जुह्वाꣳ समानीया-न्तरेण चात्वालोत्करावुदङ्ङुपनिष्क्रम्य संवदेताभिघारयेदासा-दयेत्पशुं पञ्चहोत्रा चतसृषूपस्तृणीते। मनोताप्रभृतिनेडान्तेन चरेत्सिद्धमत ऊर्ध्वमथोक्थ्यविग्रहेषु य एव प्रातःसवनिकौ[६] १५

---

१ ०र्युन्नीयमानानिसू० Ben H, ०र्युन्नीयमानिसू० Be, ०र्युन्नीयसू० C.

२ इति om. G.

३ । Thus, hesitatingly, emended. सवनमुखेष्वाच्छावाकच (०कस्य०) मसेष सवनेच C U D; सवनमुखेष्वच्छावाकचमसे च सवनमुखेषु G (sec. m.); सवन-मुखेषाच्छावाकचमसे च सवने च Be Ben; सवनमुखेच्छावाकचमसेवसवने च H

४ After माहेन्द्रम् G U D ins. ग्रहम्।

५ Thus H, विहृत्य the other MSS. (G is indistinct).

६ ०सावनीकौ or ०सवनीकौ some of the MSS.

ग्रहणमन्त्रः स एव माध्यंदिनीयः स तृतीयसवनिको[१] ।
1 251. 1. देवतामेव व्यञ्जयेत्त्रमसायत्रमसायैव त्रीᳪंस्त्रीन्पुरोडाशशक-
लानुपास्येनव[२] होतृचमस इति । त्रयाणामेवैष उक्तो भवत्य-
थायमाग्रयणस्तयस्त्रिᳪंशतो देवतानां गृह्यते । क उ खल्वेताः
५ प्रदाने विज्ञायन्त इति । पात्नीवते । विज्ञायते पत्नीवत-
54. 12. स्त्रिᳪंशतं त्रीᳪंश्च देवानिति । कथमु खलु पात्नीवतं भक्षये-
दादित्यवद्गणस्य सोम देव ते मतिविदस्तृतीयस्य सवनस्य
जगतीच्छन्दसो ऽग्निना वैश्वानरेण पत्नीवता लक्षा पीतस्य
मधुमत उपहूतस्योपहूतो भक्षयामीति । ॥ २३ ॥
१० कथमु खल्वन्तरुक्थ्यो भवतीति । प्रसिद्धं तृतीयसवन
आग्रयणं गृहीत्वोक्थ्यं गृह्णीयादथैनं ध्रुवमुपस्थाप्य त्रिषूर्ध्व-
पात्रेषु विगृह्णीयादुपयामगृहीतो ऽसि देवेभ्यस्त्वा देवायुव-
मुक्थ्येभ्य उक्थायुवं यज्ञस्यायुष इन्द्रावरुणाभ्यां[३] जुष्टं गृह्णा-
मीति । पुनर्हविरसीत्युक्थ्यस्थालीं प्रत्यभिमृशति । परिमृज्य
१५ सादयत्येष ते योनिरिन्द्रावरुणाभ्यां त्वेति । तदानीमेवापरं[४]
गृह्णात्युपयामगृहीतो ऽसि देवेभ्यस्त्वा देवायुवमुक्थ्येभ्य उक्था-

---

१ ०सावनीको or ०सवनीको some of the MSS.

२ Thus D G U (pr. m.) C Ben (pr. m.), ०पास्येतत्र H, ०पास्येरन्नव Ben (sec. m.), ०पास्येरंनव Be.

३ Nearly all the MSS. insert here and infra त्वा before जुष्टं ।

४ MSS., exc. Be once and Ben once (sec. m.), read ०परेण instead of ०परं ।

युवं यज्ञस्यायुष इन्द्राबृहस्पतिभ्यां[१] जुष्टं गृह्णामीति । पुनर्हविरसीत्युक्थ्यस्थालीं प्रत्यभिमृशति । परिमृज्य सादयत्येष ते योनिरिन्द्राबृहस्पतिभ्यां त्वेति । तदानीमेवापरं गृह्णात्युपयामगृहीतो ऽसि देवेभ्यस्त्वा देवायुवमुक्थ्येभ्य उक्थायुवं यज्ञस्यायुष इन्द्राविष्णुभ्यां जुष्टं गृह्णामीति । नात्र पुनर्हविरसीत्युक्थ्यस्थालीं प्रत्यभिमृशति । दशाभिरेवैनां मृष्ट्वा न्युब्जति । परिमृज्य सादयत्येष ते योनिरिन्द्राविष्णुभ्यां त्वेत्यथैनान्ध्रुवे ऽवनीय होतृचमसे ऽवनयेत्स्तोत्रे स्तोत्राण्यावपेच्छस्त्रे शस्त्राणि । तस्य प्रत्तस्य[२] भक्ष इन्द्रावरुणाभ्यामिन्द्राबृहस्पतिभ्यामिन्द्राविष्णुभ्यामग्निना वैश्वानरेण मरुद्भिः पीतस्य मधुमत उपहूतस्योपहूतो भक्षयामीत्येतेनैव वा भक्षयेदपि वा नित्यपूर्वेणादित्यवद्गणस्य सोम देव ते मतिविदस्तृतीयस्य सवनस्य जगतीच्छन्दस इन्द्रावरुणाभ्यामिन्द्राबृहस्पतिभ्यामिन्द्राविष्णुभ्यामग्निना वैश्वानरेण मरुद्भिः पीतस्य मधुमत उपहूतस्योपहूतो भक्षयामीति । यथो एतदौपमन्यवस्य कल्पं वेदयन्ते पुरस्तान्मिन्द्राहुती जुहुयान्मिन्द्राहुती हुत्वा हारियोजनं ग्रहं गृह्णीयादित्यथ हैके चात्वालदेशे ऽवभृथं निधाय दध्ना पयसा मधुमिश्रेण नैष्ठ्यनैर्ऋजीषमभिजुहृति यत्ते ग्राव्णा

(Margin: १० after line 10; III. 113. 2. and १५ at line 15; I. 326. 12. at line 17)

---

[१] Here begins M (see Introd. to Vol. II, p. IV).

[२] Thus U M, प्रत्तस्य D, प्रत्तस्य Be, thus or प्रत्तस्य Ben., प्रतिर H G. om. the word altogether, प्रत C.

चिच्छिदुः सोम राजन्नित्यवभृथयजूꣳषि जुहोतीति[1] कत-
मानि खल्विमान्यवभृथयजूꣳषि भवन्तीति यद्देवैनदाग्नव-
नीये ग्राकलैश्चरन्ति देवकृतस्यैनसो ऽवयजनमसि मनुष्यकृत-
स्यैनसो ऽवयजनमसि पितृकृतस्यैनसो ऽवयजनमसीत्यवभृथा-
261. 5. ५ कृताविति कतमा उ खल्वियमवभृथाकृतिर्भवतीत्यप उद्धृत्य[2]
जुहोति यज्ञस्य त्वा यज्ञपते हविर्भिः । सूक्तवाके नमो-
वाके विधेम स्वाहेति तिष्ठन्त एवावभृथेन प्रचरेयुः
261. 17. पराङावृत्तः प्रपदेनोदकान्तं प्रत्यस्येत्सिद्धमत ऊर्ध्वम्

॥ २४ ॥ पञ्चदशः ॥

262. 6. १० अथायमुदयनीयस्तस्य कः कर्मण उपक्रमो भवतीति
बर्हिर्यजुषा कुर्यात्पाणी संमृशीत परिस्तृणीयात्पात्राणि
निर्णिज्य सꣳसादयेद्ब्रह्माणं दक्षिणत उपवेश्याग्नेवोत्तरत उद-
पात्रं निधाय जघनेन गार्हपत्यꣳ स्फ्यं निदध्यात्स्फ्योपरि
पात्र्यौ पात्र्यां व्रीहीनावपेच्छूर्पादानप्रभृति[3] कर्मान्तस्तायत
१५ आ प्रस्कन्दनात्प्रस्कन्दनान्तं कर्म कृत्वा तिरः पवित्रमप
आनीयाधिश्रित्य तिरः पवित्रं तण्डुलानावपेद्यद्याज्यं निर्व-
पेद्याज्यमधिश्रयेदुभयं पर्यग्नि कृत्वा जघनेन गार्हपत्यमौप-
सदायां वेद्याꣳ स्तम्बयजुर्हरेत्सिद्धमत ऊर्ध्वं तस्य सूतस्या-
सादनं दक्षिणं परिधिसन्धिमपरं विमुच्य दक्षिणं वा परि-

---

१ See TS. VI. 6. 3. 1.

२ Thus G U M D C, उद्धत्य Ben हृत्य H.

३ From चावपेच्छूर्पा॰ unto तंडुलान् om. G Be and Ben (sec. m.).

धिमग्रेण प्राञ्चं प्रायणीयमासादयेत्प्रत्यञ्चमुदयनीयमग्निमुखा अत्र देवता इज्यन्ते। शंय्वन्त[1] उदयनीयः संतिष्ठत। ॥ २५ ॥

I. 263. 2. अथ यदि पशुरुपक्रृप्तः स्यात्पाणी संमृशीत। परिस्तृणीयात्पात्राणि निर्णिज्य सꣳसादयेत्प्रोक्षणीः सꣳस्कृत्य पात्राणि प्रोक्षेदाज्यं निरुप्याधिश्रित्य पर्यग्नि कृत्वा स्फ्यमाद- ५ दीत। संप्रैषप्रभृति पाशुबन्धिकं कर्म तायते। सिद्धमत ऊर्ध्वं।

III. 114. 17. अथो एतच्छालीकेः कल्पं वेदयन्ते मैत्रावरुण्यामिक्षया यजेतेति तस्यै सह सवनीयैर्वत्सापाकरणꣳ[2] सह सायंदोहमुदयनीयेन चरित्वा पाणी संमृशीत। परिस्तृणीयात्पात्राणि निर्णिज्य सꣳसादयेत्प्रोक्षणीः सꣳस्कृत्य पात्राणि प्रोक्षेदथ प्रातर्दोहं १० धेनूर्दोहयेदथैनां[3] गार्हपत्ये अपयित्वानभिघारितामुद्वासयेद- थाज्यं[4] निर्वपेदथाज्यमधिश्रयेदुभयं पर्यग्नि कृत्वाहवनीये वैदलकान्परिधीन्परिधायाथैनां[5] पुनरधिश्रित्याभिघारिता- मुद्वास्यान्तर्वेद्यासादयेदथाग्नये सोमायेत्याज्यभागाभ्यां चरेदाज्य- भागान्तं कर्म कृत्वा दक्षिणे वेद्यन्ते केशश्मश्रु वपते नखानि १५

---

१ Thus write G M U (sec. m.), शंयुवंतः Be U (pr. m.) C, शय्वंतं H, शंयुतं D.

२ Thus M Be Ben, वत्सानामपाक० G U D C, वत्सापाक० H.

३ ०नं Ben (pr. m.) Be.

४ Thus H U D C G (pr. m.) Ben (pr. m.); ०त्वानभिघारितमु० M, ०त्वाभिघारितमु० G (sec. m.) Be Ben (sec. m.).

५ वैदल० M only.

निक्रान्ते[१] ऽथाज्यभागप्रतिपत्क्रेडान्ता[१] संतिष्ठते । ऽथेयमुद्वसानीयोपांशु भवति पुनराधेयधर्म[२] हि[२] । सक्तन्महावेद्यै
I. 263. 9.
स्तम्बयजुषो हरणमसंनद्धा पत्नी यज्ञपुच्छमन्वास्ते । ॥ २६ ॥
षोडशः ॥

५ अथेममग्निचयं त्र्युपसत्कꣳ षडुपसत्कं द्वादशोपसत्कमिति[३] चिन्वते । स यदि साहस्रं त्र्युपसत्कं चेष्यमाणो भवति पूर्वाह्णे प्रवर्ग्योपसद्भ्यां प्रचर्य प्रथमां चितिꣳ सपुरीषामुपधाय संचिताहुती[४] जुहोति । द्वितीयां चितिꣳ सपुरीषामुपधाय संचिताहुती जुहोति । श्वो भूते प्रवर्ग्योपसद्भ्यां प्रचर्य तृतीयां
१० चितिं चतुर्थीं चितिं पञ्चमीं चितिꣳ षष्ठीं चितिꣳ सपुरीषामुपधाय संचिताहुती जुहोत्यौपवसथिकैव तृतीयाथ यदि साहस्रꣳ षडुपसत्कं चेष्यमाणो भवति पूर्वाह्णे प्रवर्ग्योपसद्भ्यां प्रचर्य प्रथमां चितिꣳ सपुरीषामुपधाय संचिताहुती जुहोति । श्वो[५] भूते प्रवर्ग्योपसद्भ्यां प्रचर्य द्वितीयां चितिꣳ सपुरीषामुपधाय
१५ संचिताहुती जुहोति[५] । स एवमेव पञ्चाहमौपवसथिकैव षष्ठ्यथ यदि साहस्रं द्वादशोपसत्कं चेष्यमाणो भवति यथासूत्रं[६] तथाथ

---

१ ०स त्वाज्य० Ben H.

२ Thus G Ben C D ; ०धर्म्याहि U, ०धर्म्यहि M, ०धर्माहिण H, ०धंम्यामाह Be.

३ ०कं वेति Ben H.

४ Here and infra some of the MSS. read ०हुतीर्जुहो० ।

५ The passage from श्वो unto जुहोति om. M Be, in G it is effaced.

६ यथासूत्रमथ H G (sec. m.).

यदि द्विषाहस्सं[1] त्र्युपसत्कं चेष्यमाणो भवति पूर्वाह्णे प्रवर्ग्यो-पसद्भ्यां प्रचर्य प्रथमां चितिꣳ सपुरीषामुपधाय संचिताकृती कृत्वाहार्यौꣳ सपुरीषामुपदधाति[2]। द्वितीयां चितिꣳ सपुरी-षामुपधाय संचिताकृती कृत्वाहार्यौꣳ सपुरीषामुपदधाति। श्वो भूते प्रवर्ग्योपसद्भ्यां प्रचर्य तृतीयां चितिं चतुर्थीं चितिं ५ पञ्चमीं चितिꣳ षष्ठीं चितिꣳ सपुरीषामुपधाय संचिताकृती कृत्वाहार्यौꣳ[3] सपुरीषामुपदधात्यौपवसथ्यिकैव तृतीयाथ यदि द्विषाहस्सꣳ षडुपसत्कं चेष्यमाणो भवति पूर्वाह्णे प्रवर्ग्योपसद्भ्यां प्रचर्य प्रथमां चितिꣳ सपुरीषामुपधाय संचिताकृती कृत्वा-हार्यौꣳ सपुरीषामुपदधाति। श्वो[4] भूते प्रवर्ग्योपसद्भ्यां प्रचर्य १० द्वितीयां चितिꣳ सपुरीषामुपधाय संचिताकृती कृत्वाहार्यौꣳ सपुरीषामुपदधाति[4]। स एवमेव पञ्चाहमौपवसथ्यिकैव षष्ठ्यथ यदि द्विषाहस्सं द्वादशोपसत्कं चेष्यमाणो भवति पूर्वाह्णे प्रवर्ग्योपसद्भ्यां प्रचर्य प्रथमां चितिमुपधायाध्यस्तपुरीष[5] एताꣳ रात्रिं वसति। श्वो भूते प्रवर्ग्योपसद्भ्यां प्रचर्य १५ पुरीषमुपधाय संचिताकृती कृत्वाहार्यौꣳ[6] सपुरीषामुपदधाति[6]।

---

१ द्विषा॰ and द्विसा॰ the MSS. promiscue; thus also चिषा॰, चिसा॰।

२ Thus Be G M, ॰मुपधाय the other MSS.

३ ॰हार्यꣳ M here and infra each time.

४ From श्वो unto ॰दधाति effaced in G.

५ Most of the MSS. ins. सपुरीषाम् after चितिम्, but cp. the following chapter.

६ कृत्वा द्वे द्वे आहार्ये सपुरीषे उप॰ M.

स एवमेव यथासूत्रं तथा वर्तमानः पुरीषंपुरीषमुपधाय संचिताकृती कृत्वाहार्याᳲ सपुरीषामुपदधात्यौपवसथिकेव[१] द्वादशी ॥ २७ ॥

अथ यदि त्रिषाहस्वं त्र्युपसत्कं चेष्यमाणो भवति पूर्वाह्णे ५ प्रवर्ग्योपसद्भ्यां प्रचर्य प्रथमां चितिᳲ सपुरीषामुपधाय संचिताकृती कृत्वा द्वे आहार्ये सपुरीषे उपदधाति । द्वितीयां चितिᳲ सपुरीषामुपधाय संचिताकृती कृत्वा द्वे आहार्ये सपुरीषे उपदधाति । श्वो भूते प्रवर्ग्योपसद्भ्यां प्रचर्य तृतीयां चितिं चतुर्थीं चितिं पञ्चमीं चितिᳲ षष्ठीं चितिᳲ सपुरीषा- १० मुपधाय संचिताकृती कृत्वा द्वेद्वे आहार्ये सपुरीषे उपदधात्यौ- पवसथिकेव तृतीयाथ यदि त्रिषाहस्वᳲ षडुपसत्कं चेष्यमाणो भवति पूर्वाह्णे प्रवर्ग्योपसद्भ्यां प्रचर्य प्रथमां चितिᳲ सपुरीषा- मुपधाय संचिताकृती कृत्वा द्वे आहार्ये सपुरीषे उपदधाति । श्वो[२] भूते प्रवर्ग्योपसद्भ्यां प्रचर्य द्वितीयां चितिᳲ सपुरीषा- १५ मुपधाय संचिताकृती कृत्वा द्वे आहार्ये सपुरीषे उपदधाति[२] । स एवमेव पञ्चाहमौपवसथिकेव षष्ठ्यथ यदि त्रिषाहस्वं द्वादशोपसत्कं चेष्यमाणो भवति पूर्वाह्णे प्रवर्ग्योपसद्भ्यां प्रचर्य प्रथमां चितिमुपधायाध्यस्तपुरीष एताᳲ रात्रिं वसति । श्वो भूते प्रवर्ग्योपसद्भ्यां प्रचर्य पुरीषमुपधाय संचिताकृती कृत्वा २० द्वे आहार्ये सपुरीषे उपदधाति । स एवमेव यथासूत्रं तथा

---

१ कृत्वा द्वेद्वे आहार्ये सपुरीषे उप० M.

२...२ Effaced in G.

वर्तमानः पुरीषंपुरीषमुपधाय संचिताङ्कृती कृत्वा द्वे द्वे आहार्ये सपुरीषे उपदधात्यौपवसथिकेव द्वादशी। कथमु[1] खल्वन्तरुपसत्कं बहिरुपसत्कमन्तर्बहिरुपसत्कमिति विजानीयाद्द्वैचस्य संवत्सरस्य द्वादशावशिष्य राजानं क्रीणीयात्सो ऽन्तरुपसत्कः। संवत्सरे पर्यवेते राजानं क्रीणीयात्स बहिरुपसत्को। द्वैचस्य ५ संवत्सरस्य षडवशिष्य राजानं क्रीणीयात्तास्त्रोपसदः स्युरुत्तरस्त्र षड्रात्रः सो ऽन्तर्बहिरुपसत्कः। ॥ २८ ॥ सप्तदशः ॥

II. 1. 8. मृदमेताꣳ समां बिलेन करोतीति[2]। समां[3] भूम्यां

II. 1. 16. निदधातीत्येवेदमुक्तं भवत्यथैतावश्वगर्दभावुत्तरत उपस्थापयति[4] पुरस्ताद्वा प्रत्यञ्चौ। स यदि पुरस्तात्प्रत्यञ्चौ दक्षिणो ऽश्व १० उत्तरो गर्दभो। ऽथ यद्युत्तरतः पूर्वो ऽश्वो[5] ऽपरो[5] गर्दभो। ऽग्निभ्यः पशूनालभत इति। पश्चानां पशूनां ब्राह्मणं भवति। स यद्यु[6] हैतान्पशूनुपाकरोत्या बर्हिष उपासनात्पाशुबन्धिकं कर्म वर्तयित्वा शिराꣳसि प्रच्छिद्यापो देहानभ्यवहरेयुरपो

---

१ Thus U G (pr. m.) C Ben (pr. m.) H M D, काउ G (sec. m.) Ben (sec. m.)

२ इति given by G U and a citation in the Mahāgnisarvasva.

३ समां D H U (pr. m.) C, समं M U (sec. m.) Ben (sec. m.) Be.

४ Thus (singul.) U (sec. m.) the Viv. and the Mahāgnis., plural the other MSS.

५ Thus (श्वोपरो) M D C U (pr. m.) the Viv. and Ms., श्वउत्तरतो Be Ben G U (sec. m.); H corrupt.

६ यद्य M. (i.e. *yady aha*).

देहानभ्यवहरन्तीति विज्ञायते । मासमेतं[1] ब्रह्मचर्यं चरति ।
सोऽधःसंवेशमाऽसाश्वस्त्युपायो भवति पूर्वदीक्षेत्येतामापद्यते[2]।
'. 14. 7. त्रयोदशमेवैतं मासमभि दीक्षमाणो मन्यतेऽत्र कृष्णाजिने
यजमानं वाचयति मुष्टी चैव न करोति वाचं च न यच्छ-
५ तीति । कृष्णाजिनप्रभृति कर्मान्त एष भवत्यावेदनात्मथमाया-
मुपसदि वेदिं विमिमीते[3] स्तम्बयजुर्हरतीति । कर्मवशा-
ı. 18. 16. कारितमेवैतद्भवत्यथ[4] संभारेषूपानिवपन्यदहश्चन्द्रमसि कृष्णं
तन्मनसा ध्यायेत्तदपीहेति । ॥ २९ ॥

II. 24. 1. उत्तरमुत्तरं प्रति बलीवर्दमुत्तरामुत्तराऽ सीतां कृषन्स-
II. 28. 9.१० र्वौषधं वपन्स्वयमातृणावकाशं नावक्रामेदित्यथ[5] हैके[6] पुरुषे
II. 37. 8. च स्वयमातृणायां च साम गायन्ति । किमु खलु स्वयमातृ-
णानिकोतं भवतीति । हिरण्येष्टका मण्डलेष्टका रेतःसिगित्येव
ब्रूयाद्यमिष्टकागणमुपदध्यात्तं न व्यवेयाद्दक्षिणेन दक्षिण-
मुत्तरेणोत्तरऽ । स यदि दक्षिणतः पुरस्तादिष्टका उपदध्या-
१५ दपसलैरावर्ततोथ यद्युत्तरतः पश्चाद्वा प्रदक्षिणमावृत्य
I. 43. 15. स्वयमातृणामेवाभिमुख इष्टका उपदध्यात्कृत्तिका उपदधा-

---

१ Thus D C M (sec. m.) Ben Ms; मासमेकं Be H G U M (pr. m.).

२ पूर्वा दी॰ Ben H.

३ मिमीते Ben H.

४ एव om. M G D C; तद् instead of एतद् Ben (sec. m.) Be.

५ नावक्रा॰ M D C H U (pr. m.) Ms; नातिक्रा॰ G U (sec. m.) Be Ben.

६ All the MSS. ins. ब्रुवते, only Ms. om.

तीति। कतमा उ खल्विमाः कृत्तिका भवन्तीति। विद्युत इत्येव ब्रूयाद्वर्णार्थे[1] बौधायनस्याग्नावग्नौ पुनश्चितिः। सह सा न पुरीषचितिः षष्ठ्या चित्या वृद्धिजेति। वृद्धिजैवेति

II. 45. 17. शालीकिः। षष्ठं प्रच्छादमाहरमाणः कस्मिन्नु खल्वेनत्काल आहरेदिति। नक्षत्रेष्टका उपधायेत्येव ब्रूयात्स त्रिभिः कर्म- ५ भिरभिप्रैति पुरीषस्योपधानेन साहस्रवता प्रोक्षणेन धेनुकरणे- नेति। सो ऽष्टाभिः कर्मभिरभिप्रैत्युत्तमे संचिताहुती शत- रुद्रीयं नमस्कारः परिषेचनं विकर्षणꣳ सर्पाहुतीः सामभिरु- पस्थानमनुशꣳसनमिति। ॥ ३० ॥ अष्टादशः ॥

III. 133. 1. अथ किं[2] नानाबीजानां निर्वपणे तन्त्रमिति[2]। स्रुगादानं १० तन्त्रꣳ शूर्पादानं तन्त्रं [3]धूःप्रभृतयः शकटमन्त्राः सर्वे तन्त्रं भवत्या[4] सावित्राद्बीजंबीजमभ्यावर्तते सावित्रं। तन्त्रं दशहोताभिप्रव्रजनं परिदानमिति तन्त्रं भवति। तन्त्रं कृष्णाजिनावधवनं तन्त्रमुलूखलाध्यूहनं तन्त्रं पुरोडाशीयाना- मावपनं तन्त्रं मुसलस्यावधानं तन्त्रꣳ शूर्पस्योपोहनं तन्त्रꣳ १५

---

१ ॰द्राववणा॰ some of the MSS. and the citation in Viv.; but cp. the vivaraṇa itself: स्रवति वै सा ताꣳ स्रवन्तीमिति (TS. v. 4. 10. 3) दोषनिष्टत्त्यर्था पुनश्चितिरिति।

२ किं and इति only given by U (sec. m.) G (sec. m.), Ms.; the other MSS. om. these words.

३ Before धूः॰ M Be Ben D C G (pr. m.) ins. प्रत्योषणं प्रत्योषणं or प्रत्योषधणं (i.e. प्रत्यौषधं ?).

४ Thus H Be G D C Ms; भवंत्या Ben U M.

हविष्कृदावपनप्रभृतिमन्त्रो बीजंबीजमभ्यावर्तते प्रस्कन्दनान्तो ।
II. 133. 13. यथो एतच्छालीकेः कल्पं वेदयन्ते सह स्विष्टकृतात्याक्रामे-
II. 134. 1. दित्येकादशप्रयाज एवैतदुपपद्यते न पञ्चप्रयाजे । यथो एतदौ-
पमन्यवस्य कल्पं वेदयन्ते पुरस्तात्स्विष्टकृतो यावदाम्नातेना-
५ भिषिञ्चेन्नात्र कृष्णाजिनं न स्रुचौ न पार्थानि भवन्ति
कुशानेव सꣳस्तीर्य तेष्वेनमभिषिञ्चेदिति[१] । कथमु खलु
क्षत्रियाणामभिषेक आवर्तत इत्यभिषेक आवेदनं प्रथमे ऽह्न्यभि-
षेकः प्रथमे ऽह्न्यश्वस्यावघ्रापणमादितश्चान्ततश्च बहिष्पवमान-
मास्तावे सुवीरस्त्वहरहर्यज्ञायज्ञियस्य[२] स्तोत्रे द्वाभ्यामभिमृशे-
१० दिति । ॥ ३१ ॥

कथमु खल्वेकादशिनानां[३] पशूनां चर्याया उपक्रमो भवती-
तीडसूनꣳ सꣳस्तीर्य पृषदाज्यं विहृत्य जुहूꣳ समानीयान्तरेण
चात्वालोत्करावुदङ्ङुपनिष्क्रम्य संवदेताभिघारयेदासादयेत्पशूꣳ[४]
पञ्चहोता चतस्रूपस्तृणीते । मुख्यस्य पशोर्दैवतमवदाय[५]

---

१ Corrected acc. to the Dvaidha; तेष्वेवैनम॰ MSS. (वेषुवैन॰ M, तथैवैन॰ H).

२ Thus, with the Saṃhitā, G Be Ben, ॰यज्ञीय॰ H U D M C.

३ Thus (खल्वेका॰) MSS. (एकादशिनीनाम् M.).

४ ॰दासादये॰ not found in Be and effaced in Ben, but cp. XXV. 23, init.—पशूꣳ seems, here and further on, to have been changed into पशून् in G.

५ ॰दैवतम॰ M U Be, the Viv., ॰दैवतम॰ H G D C Ben.—After ॰दाय M. ins. अथ ।

वृक्यमेदो यूषन्नवधाय तेन जुहूं प्रोर्णुयाद्यूष्णोपसिच्याभि-
घारयेदथोपभृति स्विष्टकृते[१] सर्वेषां व्यङ्गाणाꣳ सकृत्सकृत्स्वि-
ष्टकृते समवदाय वृक्यमेदो यूषन्नवधाय तेनोपभृतं प्रोर्णुया-
द्यूष्णोपसिच्य[२] नाभिघारयेदथ[२] हृदयं जिह्वां वक्षस्तनिम
मतस्नौ[३] वनिष्ठुमिति[४] पार्श्वाꣳ[४] समवधाय यूष्णोपसिच्य ५
नाभिघारयेदथ कꣳसे वा चमसे वा वसाहोमं गृहीत्वा
यूष्णोपसिच्याथाभिघारयेत्संमृशेत्पशुं । पार्श्वेन वसाहोमं
I. 123. 13 प्रयौत्यꣳसतः[५] कुम्भतो । जघनेनोत्तरवेदिं परिक्रम्याश्रावये-
द्याज्याया अर्धर्चे प्रतिप्रस्थाता वसाहोमं जुहुयात्परिशिꣳ-
ष्याच्च दिग्भ्यो ऽथेतरद्वसाहोमहवन्याꣳ समवनयेद्वषट्कृते हवि- १०
र्जुहोति । सो ऽनिष्ट्वैव स्विष्टकृतमुदङ्ङत्याक्रम्य जुह्वां चैव
वसाहोमहवन्यां चोपस्तृणीते । द्वितीयस्य पशोर्दैवतमवदाय
वृक्यमेदो यूषन्नवधाय तेन जुहूं प्रोर्णुयाद्यूष्णोपसिच्याभि-
घारयेदथोपभृति[६] स्विष्टकृते सर्वेषां व्यङ्गाणाꣳ सकृत्सकृत्सम-
वदाय वृक्यमेदो यूषन्नवधाय तेनोपभृतं[७] प्रोर्णुयात्समवत्त- १५

---

१ Not given by G U D M.

२ °सिच्याभिघा° G, °सिच्यानाभिघा° H.

३ Thus D Ben C U (pr. m.), मतस्नू G M U (sec. m.), मतस्नू H.

४ Thus we ought to read also IV. 9: 123. 7.

५ Here and further on the MSS. write मंस्तः मसः मौस्तः मंस्यः मस्तः ।

६ °येत्तथो° M.

७ After °भृतं G H M ins. यूष्णोपसिच्य नाभिघारयेत्, U ins. यष्णोपसिच्य नाभिघारयेदथ हृदयं जिह्वां वक्षस्तनिम मतस्नु वनिष्ठुमिति पार्श्वाम्; C is incomplete.

मेतद्यूष्णोपसिच्य[1] नाभिघारयेत्त।थैव[2] कꣳसे वा चमसे वा
वसाहोमं गृह्णीयाद्यूष्णोपसिञ्चेद्‌थाभिघारयेत्संमृशेत्यꣳशुं ।
पार्श्वेन वसाहोमं प्रयौयान्मꣳस्तः कुम्बतो । जघनेनोत्तरवेदिं
परिक्रम्याश्रावयेद्याज्याया अर्धर्चे प्रतिप्रस्थाता वसाहोमं जुहु-
५ यात्।परिशिꣳष्याच्च दिग्भ्यो[3] । वषट्कृते हविर्जुहोति । स एव-
मेव सर्वेषां पशूनाꣳ । स यत्र वारुणस्य स्विष्टकृते ऽवद्येत्त-
द्विरभिघारयेत्स।मवत्तमेवैतद्यूष्णोपसिच्याभिघारयेत्त।थैव कꣳसे
वा चमसे वा वसाहोमं गृह्णीयाद्यूष्णोपसिच्याभिघारयेत्संमृ-
शेत्यꣳशुं । पार्श्वेन वसाहोमं प्रयौयान्मꣳस्तः कुम्बतो । जघनेनो-
१० त्तरवेदिं परिक्रम्याश्रावयेद्याज्याया अर्धर्चे प्रतिप्रस्थाता वसा-
होमं जुहुयात्।परिशिꣳष्याच्च दिग्भ्यो । ऽथेतरद्वसाहोमहवन्याꣳ
समवनयेद्।वषट्कृते हविर्जुहोत्य।थ पुरस्ताद्वनस्पतेः समान्यो
दिशः प्रतियजेद।थ वनस्पतिना चरेद।थ स्विष्टकृता । सिद्धमत
III. 135. 3. ऊर्ध्वं । यथो एतदौपमन्यवस्य कल्पं वेदयन्ते मैत्रावरुणामि-
१५ क्षया निरूढया यजेतेति सिद्धमत्रौपवसथिकं कर्म जानी-
II. 62. 8. याद्यथामावास्यायाꣳ संनयतो ऽन्यत्र पिण्डपितृयज्ञात्संवत्सरं

---

१ समवत्तमेवैत॰ M, समवत्तमेतद् D; Ben om. समव॰ unto ॰घारये॰ (1. 2).

२ एव om. M, probably rightly.

३ Between दिग्भ्यो and वष॰ M H Ben U ins. तथैव कंसे वा चमसे वावनयेद्, in Ben and U these words are effaced; G (partly secunda, partly prima manu) तथैवेतरद्वसाहोमहवन्यां समवनयेद् ।

न कंचन प्रत्यवरोहेन्न शीर्षमाꣳसं खादेन्न वयसां माꣳसं नाग्निं चित्वा रामामुपेयान्नाग्निचिद्वर्षति धावेद्यदि[1] धावेदुपावर्तेतान्नाद्यमेवाभ्युपावर्तत[1] इति ब्राह्मणम् । ॥ ३२ ॥

**एकोनविꣳशः ॥**

II. 63. 8. अथास्मिन्वाजपेये सप्तदशानाꣳ रथानां त्रयस्त्रयो ऽश्वास्त ५

II. 63. 11. एकपञ्चाशतमुत्तरतः प्रष्टिं नियुञ्ज्याच्चतुर्विꣳशतिं[2] पशूनि-

II. 64. 4. त्यग्नीषोमीयश्चानूबन्ध्यश्च चतुर्विꣳशौ भवतो । ऽथ वै भवति सावित्रं जुहोति कर्मणःकर्मणः पुरस्तादिति । दीक्षणीयां निर्वप्स्यन्सावित्रं जुहोतीति । सावित्रादेव सावित्रं भवति ।

II. 64. 7. दीक्षाहुतीर्होष्यन्सावित्रं जुहोतीति । सावित्रꣳ हुत्वा दीक्षा- १०

II. 64. 8. हुतीर्जुहुयात्प्रायणीयां निर्वप्स्यन्सावित्रं जुहोतीति । सावि-

ib. 9. त्रादेव सावित्रं भवत्यन्तर्हिरण्याꣳ[3] होष्यन्सावित्रं जुहो-

ib. 10. तीति सावित्रꣳ हुत्वान्तर्हिरण्यां[4] जुहुयात्पदेन चरित्वा राजानं क्रीत्वोह्यातिथ्यं निर्वप्स्यन्सावित्रं जुहोतीति । सवि-

ib. 11. त्रादेव सावित्रं भवति । प्रथमाभ्यां प्रवर्ग्योपसद्भ्यां प्रचरिष्य- १५ न्सावित्रं जुहोतीति । सावित्रꣳ हुत्वा प्रथमाभ्यां प्रवर्ग्योप-

ib. 13. सद्भ्यां प्रचरेन्महावेद्यै पूर्वं परिग्राहं परिग्रहीष्यन्सावित्रं

ib. 14. जुहोतीति । सावित्रꣳ हुत्वा स्फ्यमाददीताहवनीयं प्रणेष्य-

---

[1] यदि धावेद् om. most of the MSS.

[2] Thus G (sec. m.), °विंशतिः Be, °विंशतं Ben, °विंशं D H M G (pr. m.), विंशं U C.

[3] °ण्यां G (pr. m.) U (sec. m.) Ben H ; °ण्यं Be U (pr. m.) M.

[4] °ण्यां U (sec. m.), °ण्ये the other MSS.

ib. न्सावित्रं जुहोतीति । सावित्रꣳ हुत्वेध्ममाददीत । रथवाहने
ib. सदोहविर्धाने संमेष्यन्सावित्रं जुहोतीति । सावित्रꣳ हुत्वा
I. 64. 15. रथवाहने सदोहविर्धाने संमिनुयादग्नीषोमौ प्रणेष्यन्सावित्रं
II. 65. 1. जुहोतीति । सावित्रꣳ हुत्वाग्नीषोमौ प्रणयेद्यूपमुच्छ्रयि-
५ ष्यन्सावित्रं जुहोतीति । सावित्रꣳ हुत्वा प्रोक्षणीराददीत ।
ib. 6. स्वर्वन्तं यूपमुत्सृज्याग्नीषोमीयं पशुमुपाकरिष्यन्सावित्रं जुहो-
तीति । सावित्रꣳ हुत्वा बर्हिषी आददीत । तस्य प्रसिद्धं
ib. 8. वपया चरित्वा वसतीवरीर्ग्रहीष्यन्सावित्रं जुहोतीति । सावित्रꣳ
ib. 9. हुत्वा कुम्भमाददीत । पशुपुरोडाशं निर्वप्स्यन्सावित्रं जुहो-
१० तीति । सावित्रादेव सावित्रं भवति । ॥ ३३ ॥

II. 63. 5. तूपरश्चतुरश्रिर्भवतीत्यनुदिशमश्रौ[१] स्थापयित्वाग्निष्ठां च
II. 66. 16. सूर्यस्थां च संमिनुयात्पञ्चैन्द्रानतिग्राह्यान्गृह्णातीति[२] । सर्व
II. 68. 2. एवैते सोपयामा ग्रहीतव्या भवन्ति । मारुत्या प्रचर्यैतान्सं-
ज्ञपयेदिति । तन्त्रमुल्मुकहरणं तन्त्रमग्निप्रैषो ऽभ्यावर्तेत[३]
१५ संज्ञप्तहोम ऊर्ध्वं[४] बर्हिषो[४] भिन्द्यात्स्वाहाकृतिप्रैष आज्यं द्वेधा
II. 71. 9. विभजेदुभयभागिन्य स्तोकीया । अथेदꣳ रथचक्रं प्रादेशमात्रं

---

१ Thus Ben H, ॰श्रौः the other MSS.

२ Before गृह्णा॰ Ben H Be ins. ग्रहान्; the word is missing in M D C and effaced in G.

३ Corrected; ॰वर्तेत U, ॰वर्तीत Be, ॰वर्तेवे the other MSS.

४ Thus G U (sec. m.) H Ben (pr. m.), ऊर्ध्वंबर्हिषि Ben (sec. m.) C, ऊर्ध्वंबर्हिषी Be, और्ध्वंबर्हिषी M.

II. 75. 8. भूमेरुच्छ्रितं[१] भवत्यपरेण परीत्य पचस्री संमृशतीति रथचक्रे
II. 79. 1. एवैते संमृशत्यथाहाजिसृतो[२] दक्षिणापथेनोपातीत्येति सूत-
ib. 2. राजन्या एवैत उक्ता भवन्ति[२] । मारुता अग्रेणाहवनीयं परी-
ib. 14. त्येति चत्तसंग्रहीतार एवैत उक्ता भवन्त्यथ यजमानं तार्प्यं परिधापयतीत्याख्येनैवैतत्तृप्तं[३] वासो भवत्यथाप्युदाहरन्ति तृपा नाम वृचास्तेषामेवैतद्भवत्यथेमं वाजपेयꣳ सर्वसप्तदशमेके[४] ब्रुवत[५] । आदेशादेव बृहत्सामैकविꣳशं वैष्णवीषु शिपिविष्ट-वतीषु स्तुवीरन्निति[६] । ॥ ३४ ॥ विꣳशः ॥

॥ इति पञ्चविꣳशः प्रश्नः ॥

---

१ ०रुत्सृप्तं M Ben C.

२ After संमृशति and भवन्ति some of the MSS. इति।

३ Thus M, ०वैततप्तं D C, ०वैसंह्रप्तं G U Ben, वैमंह्रप्तं Be, वैसंल्पतं H.

४ Thus G Ben Be, पर्वस० M, सर्वसप्त० H U; D C om. सर्व।—Before एक Be U D M ins. एव।

५ ब्रुवतेन M.

६ क्रुर्वति instead of स्तुवीरन्निति M C.

अथायꣳ राजसूयो ऽर्धसप्तदशैर्मासैः संतिष्ठते ऽर्धषोड-शैर्वा । तस्मिन्त्सोमसꣳस्थाः पञ्चैकाहा[१] अहीनो द्विरात्रः । षट् शाला[२] । अष्टौ यूपाः षड् ह्याग्निष्टोमिका द्विपशौ[३]पशुबन्धे[३] सौत्रामण्यामष्टमस्तावन्त एवावभृथाः । क उ खलु हविषो हविर्निरुप्यत इत्यानुमत इत्येव ब्रूयात्कृष्णं वासः कृष्णतूषं दक्षि-

[I. 86. 3.५]

णेति । कृष्णद्रमित्येवेदमुक्तं भवति । काममिष्ट्या पशुबन्धेनेति ।

[I. 87. 11.]

संतन्येष्ट्याग्रयणेन वा पार्वणेन वा यजेत । कथमु खलु साक-मेधपरुषीति । महारात्रे पूर्वा संततिः श्वो भूत उत्तरा प्रदोषे । किमु खल्वसमुदितं भवतीति । प्रागनूयाजिकात्संप्रैषादित्येव ब्रूयाद्बार्हस्पत्यं चरुं निर्वपति ब्रह्मणो गृह इति । योऽन्यो

[II. 91. 1.१०]

याजमानासंयुक्तो[४] ब्राह्मणो[५] भवति । भगाय चरुं वावातायै

[I. 91. 16.]

गृह इति । यान्या महिष्या[६] एव[६] सुभगा भवति । नैर्ऋतं

[II. 92. 1.]

चरुं परिवृक्त्यै गृह इति । दुर्भगैवैषोक्ता भवति । पौष्णं चरुं

[ib. 7.]

---

१ Thus M only; पंचद्वै काद H, पंचाद्वैकादा (*i.e.* पञ्च च द्व एकादाः ?) पंचाद्वैकाद Ben U, पंचाद्वैकाद्विनो Be.

२ शाला MSS.—द्विरात्रस्यैका the Vivaraṇa.

३ Thus G (sec. m.) and the Viv. °पशुपशुबंधे Be, °पशूपशुबंधे G (pr. m.) Ben U H, °पशूपशूपशुबंधे M.

४ Uncertain reading; याजमानासं° M Be Ben, याजमानसं° H U G (pr. m.), याजनसं° G (sec. m.). The Viv.: योन्याजनसंयुक्तः and यन्या-जमासंयुक्तः ।

५ After ब्राह्मणो Ben G H U ins. अथा, M अथ; this word is missing in Be and has been effaced in G and Ben.

६ Conjectural reading. महिष्येव H Be U Ben, महिष्येच M, महिष्ये G (omitting एव).

भागदुघस्य गृह इति । महानसिक[1] एवैष उक्तो भवत्यथाप्यु-
दाहरन्ति यो भागलाभी[2] दोग्धि स एषैष उक्तो भवति ।
द्वादशाहेन[3] रत्निनाꣳ हवीꣳषि । त्रयोदशे[4] मैत्राबार्हस्पत्यं ।
द्यहो ऽवशिष्ट एतस्यैव[5] पूर्वपक्षस्य । तस्मिन्संतनीभ्यां यजेताथ
चेदुक्थ्ये ऽभिषेचनीये ऽग्निं चिन्वीतैतस्मिन्नेव द्विरात्र आग्नि- ५
कानि सावित्राणि कृत्वोखाः संभृत्य पशुशीर्षाणि च वायव्येन
पशुना यजेत । ॥ १ ॥

II. 97. 7. अपां पतिरसीत्यपांपतीयाः । समुद्रियाणामेवैता उक्ता
भवन्ति । मरुतामोज स्थेति निवेष्या[6] । आवर्तानामेवैता[7] उक्ता
भवन्ति । सूर्यवर्चस स्थेत्यभिदृश्याः[8] । प्रसन्नानामेवैता उक्ता १०
भवन्ति । शक्वरी स्थेति[9] गोरु[10] जरायोरेवैता[10] उक्ता भवन्ति ।

II. 111. 15. सो ऽन्वैवाग्नेयेनाष्टाकपालेन यजेतेति । सद्यः संतिष्ठमान उक्थ्य
एतत्सूत्रं भवत्यथ चेदतिप्रवर्धेत तदानीमेवाग्नेयेनाष्टाकपालेन

---

१ Thus Be Ben (sec. m.); माहानसिक G (sec. m.) and one copy of the Viv; महानासिक H U G (pr. m.) Ben (pr. m.) and another copy of the Vivaraṇa; महानासीक M.

२ °भी M Ben, °भि Be H G U.

३ शाहो M.

४ °दशो M, दशो all the other MSS.

५ एव om. M.

६ Thus G U M, °वेष्या Be Ben, °वेष्या H.

७ आहतानां or आहतानां MSS.

८ Thus all, against अतिदृश्याः of the text proper.

९ गोरुल्ब्या seems to have fallen out.

१० Conjecturally; गोरजरायो° M, गारुजरायो° G (pr. m.), गारुल्यायो Ben (sec. m.), गारल्यायो Ben (pr. m.), गारजरायो° H Be U, गारुल्जा-रयो G (sec. m.).

II. 114. 4. यजेत । श्वो भूते सारस्वतेन । दशदशात्र चमसमभिसंजानत
इति । होतृचमसे चोद्गातृचमसे च सप्तसप्ताथेतरेषु नवनव ।
II. 117. 1. प्रसर्पणप्रभृतय एवैते[१] भवन्त्यप्तुषोमान्ता । अथायं प्रतीचीन-
स्तोमः केशवपनीयो ऽतिरात्रः षोडशिको भवति । तस्य
५ ह्याग्निष्टोमिकानि स्तोत्राण्यावृत्तानि भवन्त्येकविंशो बहिष्प-
वमानः सप्तदशान्याज्यानि माध्यंदिनस्य पवमानः पञ्चदशानि
पृष्ठान्यार्भवस्य[२] पवमानस्त्रिवृद्यज्ञायज्ञियमित्यथ[३] प्रतीचीन-
स्तोमाय केशवपनीयायातिरात्राय दीक्षते । तस्य षड् दीक्षाः
II. 117. 14. षडुपसदस्त्रयोदश्यां प्रसुतश्चतुर्दश्यामुदवसानमथैतस्मिन्नेव पक्षा-
१० वशेषे व्युष्टये[४] द्विरात्राय दीक्षते । स एतां चैकाꣳ रात्रिं
पूर्वपक्षस्य दीक्षितो भवति द्वे चापरपक्षस्य । तासां[५] द्वादशो-
पसदो । ऽथोपवसत्यथोपवसथीये[६] ऽहन्यमावास्यायां[६] पूर्वमह-
II. 118. 2. र्भवत्युत्तरस्मिन्नुत्तरमिति । संतिष्ठते व्युष्टिद्विरात्रो[७] । ऽथो-
त्तराꣳ शालामध्यवस्येदथ मथित्वाग्नीन्विहृत्योदयनीयायाग्नि-

---

१ Thus Ben, **एवते** M, **एते** H Be G U.

२ Thus M G (sec. m.), °**र्भवतिस्य** Ben, °**र्भव** the other MSS.

३ **अथ** om. H Ben.

४ Thus M only, **व्युष्टि** the other MSS.

५ Thus G (sec. m., first hand invisible) and the Viv., which comments: **तृतीयप्रभृतीनाम्**; **तस्यांसा** H U, **तस्याशां** Be, **तस्य** M, Ben, defective.

६ Thus, hesitatingly, emended; **थोपवसत्यथान्यौपवसथ्योभवतिमावा**° G (pr. m.), **थोपवसत्यथाह्नींन्योपवसथ्यममावा**° Ben, **थोपवसथ्येह्न्यमावा**° G (sec. m.), **थोपवसथाह्नान्यौपवसथ्योमावा** H Be M (the last only °**सथ्ये-ममा**°), **थोपवसथाह्नान्यौपसथ्योमावा**° U.

७ Thus, here and further on, M only; °**ष्टिद्वि**° all the other MSS.

ष्टोमाय[१] दीक्षते। तस्य तिस्रो दीक्षास्तिस्र उपसदः सप्तम्यां प्रसुतः। संतिष्ठत एष[२] उदयनीयो[१] ऽग्निष्टोमः सहस्रदक्षिणो। ऽथैतस्मिन्नेव पक्षावशेषे क्षत्रस्य धृतिनाभिविधत्ते[३] देविकाहविर्भिस्त्रैधातवीयया सौत्रामण्येति। संतिष्ठते राजसूयो ऽर्धसप्तदशैर्मासैरथ शालीकेः केशवपनीयान्तस्तं ऽर्धषोडशाः[४]। ५

॥ २ ॥ प्रथमः ॥

अथातो ऽन्नसवः। प्रसिद्धमेव प्रथमो ऽर्धमासः संतिष्ठते। पञ्चाहेन चातुर्मास्यानि द्व्यहेन संतनी अष्टमे ऽहनीन्द्रतुरीयं नवमे ऽह्नि पूर्वाणि देविकाहवींषि दशमे ऽह्न्युत्तराण्येकादशे[५] द्वादशे त्रयोदश इति त्रिषंयुक्तैश्चतुर्दशे वैश्वानरो द्वादश- १० कपालः पञ्चदशे वारुणो यवमयश्चरुरिति मासो। द्वादशाहेन रत्निनां हवींषि त्रयोदशे मैत्राबार्हस्पत्यं द्व्यहेन संतनी अर्धमासेनाभिषेचनीय उक्थ्य इति द्वौ मासावर्धमासेन सप्तदशो दशपेयो ऽर्धमासं दीक्षितो[६] दीक्षितव्रतीति त्रयो मासा। अर्धमासेन प्रतीचीनस्तोमः केशवपनीयो ऽतिरात्रो १५ ऽर्धमासेन व्युष्टिर्द्विरात्र इति चत्वारो मासा। अर्धमासेन क्षत्रस्य धृतिरिति। ते ऽर्धपञ्चमा। अथ शालीकेः। सप्ताहेन

---

१ Thus M; °विहृत्योदवसानीयाया° or यया° the other MSS.

२ सवसुषड्वधानीया Ben.

३ Thus G (sec. m.) and the Viv.; °भिधत्ते Be U, °भिविध्यते Ben, °भिधीयंते M.

४ Thus M Be G (sec. m.), °षोडशः H U G (pr. m.), °षोडश Ben.

५ °ह्न्युत्त° Be Ben.

६ Effaced in M.

पवित्रो ऽग्निष्टोमः स एवमेव पञ्चावशेषꣳ सिद्धमा वारुणा-
द्वादशाहेन रत्निनाꣳ हवीꣳषि त्रयोदशे मैत्राबार्हस्पत्यं द्व्यहेन
संतनी इति मासो । ऽर्धमासेनाभिषेचनीय उक्थ्यो ऽर्धमासेन
सप्तदशो दशपेय इति द्वौ मासावर्धमासेन प्रतीचीनस्तोमः
५ केशवपनीयो ऽतिरात्रो ऽर्धमासेन व्युष्टिर्द्विरात्र इति त्रयो
मासा । अर्धमासेन क्षत्रस्य धृतिरिति । ते ऽर्धचतुर्था । अथ
पतन्तको । द्वादश दीक्षा द्वादशोपसदः । सप्ताहो ऽहीनो
राजसूयो । यथावकाशमितरै राजसूयहविर्भिर्यजते । ऽथ
देविकाहविर्भिर्यजते । ऽथ त्रैधातवीयया यजते । ऽथ सौत्रा-
१० मण्या यजते । संतिष्ठते राजसूयः । ॥ ३ ॥ द्वितीयः ॥

II. 119. 1. अथेममिष्टिकल्पं पञ्चदशसामिधेनीकं च सप्तदशसामिधे-
नीकं च समामनामस्तत्र[१] सिद्धं[१] याजमानं बौधायनस्य
कल्पो[१] । यथाम्नायꣳ शालीके स्तोꣳस्तृचाननुब्रूयादिति । त्रिः
प्रथमामनूच्य तिस्रो ऽनन्तरा अनुब्रूयात्त्रिरुत्तमां । ताः[३]
१५ पञ्चदश[३] । पञ्चदशानुब्रूयादित्येकादशैमाः[३] सामिधेन्यः समा-
मनामस्तासां त्रिः प्रथमामन्वाह त्रिरुत्तमां । ताः पञ्चदश ।
सप्तदशानुब्रूयादेकविꣳशतिमनुब्रूयाच्चतुर्विꣳशतिमनुब्रूयात्त्रिꣳ-
शतमनुब्रूयाद्द्वात्रिꣳशतमनुब्रूयात् षट्त्रिꣳशतमनुब्रूयाच्च-
त्वारिꣳशतमनुब्रूयाच्चतुश्चत्वारिꣳशतमनुब्रूयादष्टाचत्वारिꣳशत-

---

१ तस्य प्रसिद्धं M.

२ कल्पे M.

३ Thus corrected; ताः पंचदश सप्तदशानु° M Be U H, ताः पंचद-शानु° Ben; in M सप्तदश is effaced and G is defective.

मनुब्रूयादिति धाय्यालोक एता धातव्या भवन्त्याग्नेय्यः सर्वा गायत्र्यः। सर्वाणि छन्दांऽस्यनुब्रूयादपरिमितमनुब्रूयादिति धाय्यालोक एवैता धातव्या भवन्ति। नैताः सर्वा गायत्र्यो। गायत्री पुरोऽनुवाक्या भवति त्रिष्टुग्याज्या। पुरस्ताल्लक्ष्मा पुरोऽनुवाक्या भवत्युपरिष्टाल्लक्ष्मा याज्या। मूर्धन्वती पुरोऽनु- ५
वाक्या भवति नियुत्वत्या यजत्युपांऽशुयाजमन्तरा यजतीति। दर्शपूर्णमासयोरेवैतदुपपद्यते नान्यत्र। ॥ ४ ॥ तृतीयः ॥

अथेमाः काम्या इष्टयो निष्पुरीषेणैव प्रयोक्तव्या भवन्ति। स[1] संवत्सरं पयोव्रतः स्याद्द्वादशाहं वा यावद्वा[2] शंऽसीत[2]। तासां याः समानसंयोजना एकां चेत्तासां निर्वपेत्सर्वा एवैता १०
निर्वप्तव्या भवन्ति यथो एतदनायुक्तो[3]ऽग्निपरिचरोऽल्पमुद्धृत्य पुनरप्युद्धरति। कथमत्र प्रायश्चित्तंऽ सिध्यतीइ न सिध्यतीइ इति। सिध्यतीत्येक आहुरथ हैक आहुर्न सिध्यतीति। निर्दिष्टभागो वा एतयोरन्यो ऽनिर्दिष्टभागो ऽन्य इत्युभावु[4]
II. 125. 3. खल्विमावनिर्दिष्टभागौ भवतो। नैव सिध्यतीति। तन्नं १५
ष्टेरादानं। गार्हपत्यसकाशाद्भूष्टिमाददीत। तयाहवनीये[5] वैश्वानरस्य कपालान्युपदध्यात्। प्रदक्षिणमावृत्य गार्हपत्ये मारुतस्य

---

[1] Found in Ben H, the other MSS. om. the word.

[2] Thus G; तावद्वा इंसीत Be, यावत्द्वाशंसीत M U, यावत्द्वादशसीत H याव -- सीत Ben.

[3] Thus Ben Be G (sec. m.); °नुयुक्तो H G (pr. m.) U, °नुयुक्तो M.

[4] Thus G M U; उभाउ H Be; Ben defective.

[5] तया° G (sec. m.).

कृतानि पिष्टानि समुप्य[1] संयुत्य[1] व्यभिमृश्य[1] पिण्डौ[1] कृत्वा-ग्रेण[1] मारुतस्य पिण्डं पर्याहृत्याहवनीये वैश्वानरमधिपृञ्ज्या-त्प्रदक्षिणमावृत्य[2] गार्हपत्ये मारुतं त्वचं ग्राहयित्वेमं त्वचं ग्राहयेदमुं पर्यग्नि कृत्वेमं पर्यग्नि कुर्यादमुम्[3] अपयित्वेमम्[3] अप-

५ येदपि वोभयमेवोभयत्र कुर्यात्तस्य शृतस्यासादनं दक्षिणं[3] परिधिसंधिमपरं[4] विमुच्य दक्षिणं वा परिधिमग्रेण । सिद्ध-

I. 125. 11. मत ऊर्ध्वमेतस्मिन्वा एतौ मृजाते यो विद्विषाणयोरन्नम-

I. 126. 22. त्तीतीतरमितरेणेत्येवैष[5] उक्तो भवति । यं मृधो ऽभि प्रवे-पेरन्राष्ट्राणि वाभि समियुरिति । प्रतिवेशा राजानो मृधः ।

I. 127. 15.१० स एव जनपदा[6] राष्ट्राणि विशो । यो हतमनाः स्वयंपाप इव स्यादिति । सति बले हतमनाः स्वयंपाप इव स्यादिति ।

I. 127. 21. साधुरूपे कुले स्वयंपापो । यस्मै प्रत्तमिव सन्न प्रदीयेतेति ।

---

१ Thus Be M; संयुत्यव्यूह्याभिमृश्य U G, समुप्यसंयुत्यपिंडौ व्यकृत्वाग्रेण Ben, संयुक्त्वाव्यूह्याभिमृश्य H.

२ Thus (अधिपृंज्यात्) Ben, अधिपृश्यात् M, अधिव्रज्यात् G H U, अधि-प्रष्टज्यात् Be, cp. XXVI. 6 : 279. 9 : अधिपृञ्जन्; it is synonymous to अधिपृञ्ज्यात् ।

३ Om. Ben.

४ Thus all the MSS. exc. M, which has परिधिसंधिमन्वितरं; is अपरं to be cancelled? A prayoga omits it.

५ Thus G (sec. m.), °अमत्तीतरमितरेणेत्येष U, °अमत्तीतिरमितरेणेत्येष Ben, °अमत्तीतरिमितीतरंमितीतरेणेत्येवैष M,° अमत्तितरमितीतरेणेत्येष एवैष Be, ०मितरेणेत्येष H (partly defective).

६ वा ins. G.

I. 128. 17. प्रत्तमनुपाकृतं[१] प्रतिबध्यमानमेवैतद्भवत्यथास्यामध्वरकल्पाया-
मिडान्तं[२] प्रथमं तन्त्रं कुर्यादेवं द्वितीयं। तृतीयेन सहावशेषं
वर्तयेत्कथमत्र भक्षा इति। तत्रतत्र वा भक्षयेदपि वा
I. 130. 4 सर्वासाꣳ समवदाय कृत्वान्ततो[३] भक्षयेदनड्वान्होत्रा देय इति।
II. 130. 7. यजमानस्यैवैष गौष्ठाद्दातव्यो भवति। वेदिं परिगृह्यार्धमुद्ध-
II. 131. 6. न्यादर्धं नेति। दक्षिणं वा वेदेरर्धमपरं वेत्यैन्द्रस्यावदाय
वैश्वदेवस्यावद्येदथैन्द्रस्योपरिष्टादिति। द्वे एवैते अवदाने उक्ते
II. 131. 9. भवत। उपाधाय्यपूर्वयं[४] वासो दक्षिणेति। प्रवेणतो[५]
वान्ततो वा ताम्राणि वा नीलानि वा सूत्राण्युपहितानि[६]
II. 131. 13. भवन्त्यपि वोपधानरज्जुरेवैषोक्ता भवत्यथास्याꣳ संज्ञानेष्याꣳ[७] १०
सकृदेवानुवाचयेत्सकृदाश्रावयेद्द्वे ह्यस्यै याज्यानुवाक्ये भवतः।
॥ ५ ॥

---

१ Thus Be; °मनापहृतं M G (pr. m.), °मनापापहृतं Ben H U, °मनापाहृतं G (pr. m.); °मनापाहृतमप्रति °G (sec. m.).

२ Thus (प्रतिबध्यमान°) M G U, प्रतिवध्य° the other MSS. (G, अप्रतिब° sec. m.).

३ Thus Ben, कृत्वाततो G U M, कृत्वातितो H.

४ Thus (cp. XIII. 20 : 131. 5) M only, उपधाय्य° the other MSS. and the Viv.

५ Thus M Be, प्रतिवेणतो Ben. प्रवतो H, प्रणवतो G U, प्रणत: the Viv. (both copies).

६ Thus Ben M Be °हतानि G H U.

७ Thus Ben Be U G, संज्ञान्येष्ट्रां M H; the correct reading seems to be (see XXIV. 3 : 187. 7) संज्ञानीष्ट्रां।

II. 132. 16. अथ वै भवति यदि नावगच्छेदिममहमादित्येभ्यो[१] भागं
निर्वपाम्यामुष्मादमुष्यै विशो ऽवगन्तोरिति निर्वपेदिति निरू-
प्योपरमति[२] । परिदानान्तं कर्म कृत्वाथैतान्व्रीहीन्कृष्णाजिने
समुप्योत्तरार्धे ऽग्न्यगारस्यासञ्जयेदथावगते सꣳसादयेत्प्रोक्षण-
II. 133. 15. ५ प्रभृतिना कर्मणा प्रतिपद्येत । सिद्धमत ऊर्ध्वं । यथा नख-
निर्भिन्नायामेवꣳ शतकृष्णलायां । पुरा वा तण्डुलानामावप-
नाद्रुक्ममवदध्याच्छृतमुत्तरमपि[३] वैनꣳ शृतमेव सुवर्णरजताभ्याꣳ
II. 136. 9. रुक्माभ्यां परिगृह्यान्तर्वेद्यासादयेदाग्नेयस्य च सौम्यस्य चैन्द्रे
समाश्लेषयेदिति । व्यभिमृष्टानां पिण्डानां पुराधिवृञ्जना-
II. 138. 12. १० त्समाश्लेषयितव्यं[४] भवति । सर्वेषामभिगमयन्नवद्यतीति[५] सदै-
II. 140. 17. वतस्य[५] सस्विष्टकृत्कस्येत्येवेदमुक्तं[६] भवत्यथो खलु यावतीः समा
एष्यन्मन्येत तावन्मानꣳ स्यादिति । त्रिꣳशद्वर्षस्येत्स्यात्सप्ततिमानं
कुर्वीत । चत्वारिꣳशद्वर्षस्येत्स्यात्षष्टिमानं कुर्वीतैष एवैतस्याभि-

---

१ इदम् instead of इमम् Be Ben H M.

२ Probably इति has fallen out.

३ अवदध्यात् Ben M, उपदध्यात् Be G U H.

४ Thus (°धिवृंजनात्) M G (sec. m.), °धिव्रजनात् U H G (pr. m.), °धिंजनात् Be; Ben is defective; cp. अधिवृञ्ज्यात् XXVI. 5 : 277 2. Bhavasvāmin gives the periphrase : प्रागधिश्रयणात् ।

५ Thus U G Ben; °तीतिसदैवस्य M, °तीतिसदेवतस्य H, °तितीडे-दैवतस्य Be.

६ Thus M only; सस्विष्टकृतस्ये° Be, सस्विष्टकृतस्ये° or स्विष्टकृतस्ये° the other MSS.

I. 142. 12. वृद्धिकल्पो[१] ऽथ बाह्मणेषु च संज्ञानेष्ट्यां[२] च सकृदेवानुवाच-
142. 16. चैतस्यदाश्चावचैतस्यावदाना: समानदेवता आपोनप्त्रीयं चरुं
पुनरेत्य निर्वपेदिति को नु खल्वपां नपाद्भवतीति वैद्युत
I. 145. 12. इत्येव ब्रूयात्कृष्णमधु चेति पौत्तिकमित्येवेदमुक्तं[३] भवत्यन-
स्निग्धमिति चिवलीकमित्येवेदमुक्तं[४] भवत्यथाप्युदाहरन्ति ५
II. 149. 13. चिच्छदिष्कमित्येवेदमुक्तं[५] भवति यथा चिधातावेवं[६]
संदिग्धपुरोडाशस्यावदानकल्पः ॥ ६ ॥ चतुर्थः ॥

II. 152. 2. स सर्पानसृजतेति मासा एवैत[७] उक्ता भवन्ति स
II. 155. 10. वयांसि असृजतेति छन्दांस्येवैतान्युक्तानि भवन्ति स वैव
II. 155. 13. स्यादिति पुराणगार्हपत्यमभ्युपदिशन्ति तस्य पशुवेलाया- १०
मुल्मुकमादाय दक्षिणया द्वारोपनिर्हृत्य दक्षिणेन सदः परीत्य
दक्षिणेन मार्जालीयं धिष्णियं पर्याहृत्यान्तरेण यूपं चाहव-
नीयं चोपातिहृत्यान्तरेण चात्वालोत्करावुदङ्ङुपनिर्हृत्य तेन
पशुं अपयेयुरथ यदाहवनीयादुल्मुकं स्यादपया तस्यहा-

---

१ एतस्य om. M; Ben Be are defective here.

२ संज्ञान्येष्ट्यां again M G U H, see above.

३ पौतिक° M Ben, वौतिकं the Viv. (one copy), पौतीक° G U, पौचीक H Be and another copy of the Viv.

४ °वल्गीक° Ben H, °वल्मिक° Be M G U.

५ Thus Ben; चिच्छदीत्ये° M, चिच्छदित्ये° Be, चिविच्छतीत्ये° H G U.

६ चैधातावेवं Be, चिधातवेवं M, चि (or चे° चै°) धातवीयेवं the other MSS.

७ Thus M only, एवैता all the other MSS.

हरेयुः । किंदेवत्यानि खल्वपाव्यानि भवन्तीति । द्वे प्राजा-
II. 156. 14. पत्ये आग्नेयं वायव्यं वैश्वदेवमितीष्टर्गो वा अध्वर्युर्यजमान-
स्येष्टर्ग इत्युष्णाग्रमित्येवेदमुक्तं[1] भवत्यथाप्युदाहरन्त्यध्वर्युरेवैष
उक्तो भवत्यासन्यान्मा मन्त्रात्पाहि कस्याश्चिदभिशस्त्या इत्यनु-
५ व्याहारो ह[2] वा आसन्यो मन्त्रस्तस्मान्मा पाहीत्येवेदमुक्तं
II. 160. 14. भवति । तस्माद्यज्ञवास्तु नाभ्यवेत्यमित्यहोरात्रावित्येकं । याव-
दग्नयः प्रीताः[3] स्युरित्येतदेकं । यावदेनमभिवर्षेदित्येतदपरं ।
II. 163. 9. द्वौ समुद्रौ विततावजूर्यावित्यहोरात्रावेवैतावुक्तौ भवतः ।
पर्यावर्तेते जठरेव पादा इत्युदरे पादा इत्येवेदमुक्तं भवति ।
१० तयोः पश्यन्तो अतियन्त्यन्यमपश्यन्तः सेतुनातियन्त्यन्यमित्यहः
पश्यन्तो अतियन्ति रात्रिं स्वप्नेन सेतुनातियन्त्यन्यमिति ।
II. 163. 19. द्वे द्रधसी सततो वस्त एक इत्यादित्यो ऽहोरात्रे वस्त इत्ये-
वेदमुक्तं भवति । तिरोधायैत्यसितं वसानः शुक्रमादत्ते अनु-
हाय जार्या इति । रात्रिं वसानस्तिरोधायैति शुक्रमादत्ते
II. 167. 8. १५ ऽहरित्येवेदमुक्तं[4] भवति । कीटावपन्नस्येति । कतमो नु
II. 167. 10. खल्वयं कीटो भवति[5] । य एवैष पिण्डान्संवर्तयतीति । नित्ये

---

१ Thus (उष्णाग्रम्) M G U H and the Viv. (periphrase: दर्वी वा उलूकं वा); उलप° Be, उ–प° Ben.

२ Only given by M Be.

३ All the MSS. om. the visarga and Be reads प्रिता।

४ अहरि° MSS.

५ इति ins. M G U

